# संक्षिप्त सूचना।

श्रीजैनागमके सर्वमान्य श्रीदशवैकालिक सूत्रकी प्रामाणिकता, उपादेयता आदि श्रीजैनशासनमें सर्व सज्जनोंको सुविदित है। इसमें साधुओंके आचार विचारका अच्छी तरह वर्णन किया है। प्रत्येक साधुको इसके प्रतिपादित विषय कण्ठ करने पड़ते हैं इसलिये ऐसा उपयोगी सूत्र प्रत्येक जैनधर्मानुयायी अल्प मूल्यमें प्राप्त करसकें इस सदिच्छासे परम विरक्त पन्न्यासऋद्धिमुनिजीने श्रद्धालु धार्मिक सद्गृहस्थोंको इसके छपानेकी रुचि प्रकट की, उनकी उपयोगी आज्ञाको सादर शिरोधार्य करके सद्गृहस्थोंने इसके मुद्रणके निमित्त द्रव्यसाहाय्य किया।

उक्त पन्न्यासऋद्धिमुनिजी गृहस्थाश्रममें प्रायः दो लक्ष मुद्राकी सम्पत्तिके स्वामी थे, वैराग्य उदय होजानेसे संसार और उसके वैभवकी अस्थिरता, दुःखोत्पादकता आदि आत्मानुपयोगी परिणाम विचारकर उससे विरक्त होगये। तत्काल अपनी सभी सम्पत्ति त्यागकर शुद्ध चारित्र ग्रहण किये १९११ विक्रमसंवत्में श्रामण्य धर्ममें इनकी योग्यता देखकर जैनाचार्य श्रीजिन यशःसूरिजीने इनको बड़ा श्रेष्ठ पन्न्यास पद प्रदान किया। उसमें ग्वालियर लश्करके राजमान्य सेठ नथमल चौतमलजी गोलेछाने उत्सवपूर्वक उत्तम प्रबन्ध किया था। इन्होंने अनेक देशोंमें विहार करके अपनी वाणीसे अनेक जीवोंको उपदेश करके कितने ही जीर्णोद्धार, पुस्तकोद्धार और पाठशाला स्थापन किया है।

इनके गुरु श्रीजैनाचार्य श्रीजिनयशःसूरिजी महाराज ऐसे महात्मा थे कि उन्होंने गृहस्थाश्रममें ही धर्मकी क्रियाओंके सोत्साह आचरण करनेसे बड़ी प्रसिद्धि प्राप्त करली थी। यह मारवाड़ प्रान्तस्थ जोधपुर प्रदेशके निवासी, सांडगोत्री

ओसवाल ज्ञातीय थे नाम आपका जेठमलजी था। इन्होंने एक समय गृहस्थाश्रममें डेढ मासका उपवास किया था और भी कितने ही कठिन तप किये थे। जब आपको गृहस्थाश्रममें रहना वान्ताशनके समान मालूम पडने लगा तब परम वैराग्यसे श्रीमन् मुनिमहाराज बडे प्रभाविक श्रीमोहनलालजीसे चारित्र ग्रहण किया था, और अनेक भव्यजीवोंको प्रतिबोध देके धर्मकी बडी उन्नति की। इन्होंने बड़े त्याग, वैराग्य और तपस्या और पन्न्यास पद प्राप्त किया और अपने गुरुभाई हर्षमुनिजीको पन्न्यास पद प्रदान किया। अपने गुरु भाइयोंमेंसे गुमानमुनिजी, और शिष्योंमेंसे ऋद्धिमुनिजी और केसर मुनिजीको पन्न्यास पद दिया और रतनमुनि तथा भावमुनिको गणिपद प्रदान किया। इसके अतिरिक्त उस समय ग्वालियरमें अनेक प्रकारके महोत्सव हुए थे। इसके अनन्तर सेठ नथमलजी जीतमलजी गोलेछा? (गवालियर लश्करवाले)ने महाराजश्रीको सम्मेत शिखरजीकी यात्रा करायी; वहांसे विहार कर कलकत्ता पधारे। वहां रायबहादुर बद्रीदासजीने बडी धूमधामसे आपका प्रवेश महोत्सव किया वहां जैनधर्मकी उन्नति करके जगत्सेठके आग्रहसे मुर्शिदाबादमें चातुर्मास बड़ी धूमधामसे किया। वहांके राजमान्य बाबुओंने बडे उत्साह और समारोहसे उक्त महाराजको आचार्यपद प्राप्त कराया। उस समय उपस्थित सज्जन तथा प्रतिष्ठित पुरुषोंकी सन्निधि थी जिनमें प्रधानतया कलकत्ता, मुर्शिदाबाद आदि वाले सज्जन थे। आपने अजीमगंज, बालूचरमें ३ चातुर्मास कर अन्त्य चौमासा पावापुरीमें किये जहां जैनशासननायक चरम तीर्थङ्कर महावीर स्वामी थे उनकी निर्वाण कल्याणकभूमि पर ९३ उपवास करके महात्मा यशःसूरिजी स्वर्गको पधारे थे इनके प्रियशिष्य वर्तमान पन्न्यासऋद्धिमुनिजी हैं।

प्रकृत ग्रन्थ संशोधक. श्री मो सं पाठशालाध्यापक रमापति, मिश्र तथा वे. प्रे. पं. हरिदत्तशर्मा.

# जैन सम्प्रदायमें सर्वमान्य आदिग्रन्थ दशवैकालिक सूत्रको छपानेमें द्रव्यसहायता करनेवाले सद्गृहस्थोंकी नामावलि

५००) रु० सेठ हीरालाल दस्सुखभाई
२२५) " सेठ पानाचंद भगुभाई
२००) " भाणाभाई केसरीचन्द
२००) " सेठ चुन्नीलाल फकलजी
१०१) " भगवानदास हीराचन्द
१०१) " श्रीकान्दावाडीके संघकी तरफसे मार्फत हस्ते गरुलचन्दजी हरनाथजी
६५) " शाहमेघजी भाई कच्छी वीसा श्रीमालीकी तरफसे
५१) " सेठ रूपचन्द लखूभाई हस्ते नगिनभाई

१००) " भगताजी हठाजी.
५१) " गुलालचन्दजी नथाजी बरोदरावाला
५१) " ठाकरसीभाई पादीववाला
२५) " सा रामिगाजी पोमाजी
१५) " श्रीपोरवारके मुकादमके पंचकी तरफसे
२१) " श्रीमाजी मोतीजी
२१) " कृष्णाजी हुक्मीचन्द
२१) " शा दायाजी त्रेवीचन्दजी
२१) " " शाकलचन्द नथमलजी
२१) " " हरजीजी गोमाजी

२१) ” ” भीमाजी कपूरचन्दजी.
२१) ” ” हिन्दूजी देवराजजी.
२१) ” ” अमरंजी जेठाजी.
२१) ” ” विकाजी मूलचन्दजी.
१५) ” ” कपूरचन्द वनेचन्दजी.
१५) ” ” गोमराज फतेचन्दजी.
१५) ” ” हंसराज कपूरचंदजी.
१५) ” ” जोराजी देवराजजी.
१५) ” ” भीमाजी भभूतमलजी.
१५) ” ” भीखाजी ऋषभदास.
१५) ” ” भूताजी भगवान्जी.
१५) ” ” नवलमल मोतीलाल.
१५) ” ” लालचन्द सदाजी.
१५) ” ” शा. चापाजी कृष्णाजी.
१५) ” ” बजरंगजी ओङ्कारमल.
१५) ” ” अमीचन्द छोगमलजी.
११) ” ” भूताजी भूरमल.
११) ” ” भूराजी फूलचन्द.
११) ” ” कृष्णाजी केसरीमल.
११) ” ” मोतीचन्द गोमराज.

२०९८

# प्रस्तावना ।

प्राक्तनशुभकर्मविपाकदर्शितसुशासनः श्रीशय्यम्भवस्वामी दोषायतनमिमं जीवलोकमवलोक्यात्मोद्दिधीर्षया श्रीजिनशासनमनुसृत्य यदा दीक्षामुररीचक्रे तदासीदन्तर्वत्नी तत्पत्नी। ततश्च गच्छता कालेनाष्टवर्षदेशीयस्तत्तनूजो स्वां प्रसूमन्वयामास क्वास्ते मम जन्मद इति। वत्स! गर्भस्थित एव त्वयि चारित्रमङ्गीचकार त्वज्जनक इति तयाभिहित एव चम्पापुरीमलङ्कुर्वाणे निजजनयितर्य्यासंसाद तां, सूनुरनन्यसाधारणो मनकाभिधानः स बालकः, आविश्चक्रे च स्वीयाचारित्रजिघृक्षाम्। हन्त दिष्ट्येदं मतिस्सम्पद्यत इति तमनुजग्राह स दीक्षयाशु मुनिमिति। उपाश्रयागतश्च श्रीशय्यम्भवस्वामी ज्ञानचक्षुषा षण्मासावशिष्टजीवितं विशेषकृपाभाजनन्तमुद्दिधीर्षुरतिविस्तृतजैनागमं दशभिरध्ययनैः संचिक्षेप। तमेव विषयं समाहितेन मनसा ध्यायन्समाधियोगेन कृतार्थीबभूव स मुनिरिति। एवमुपयोगिनोऽस्यातिमान्यस्य सूत्रस्योपलभ्यन्ते द्विधा व्याख्याः, तासु च यथावस्थितमर्थप्रकाशिका नातिसूक्ष्मा नातिविस्तीर्णा श्रीसमयसुन्दरगणिविरचिता वृत्तिरेव सर्वोपयुक्तेति सर्वहितनाम्न्या मुद्रापितास्माभिः।

एतद्वृत्तिनिर्माणसमयश्च समासी वृत्तिकृता स्वतोऽलेखि—

चन्द्रकुले श्रीखरतरगच्छे जिनचन्द्रचन्द्रसूरिनामानः । जाता युगप्रधानास्तच्छिष्यः सकलचन्द्रगणिः ॥ १ ॥
तच्छिष्यसमयसुन्दरगणिना चक्रे च स्तम्भतीर्थपुरे । दशवैकालिकटीका शशिनिधिशृङ्गाररमितवर्षे १६९१
॥ २ ॥ इति ।

एतन्मुद्रणावसरे रायधनपतसिंहजी प्रतापसिंहजी मुद्रापित व्याख्याचतुष्टयसहितपुस्तकेन हस्तलिखित क. ख. चिह्नितपुस्तकाभ्याञ्च पाठशुद्धिटिप्पण्यादिप्रदानपुरस्सरं ग्रन्थोपयोगिता व्यधायि तथापि पुरुषधर्मसञ्जातभ्रान्तिं सहृदयाः पाठकमहाशयाः सहन्तामिति ।

एवमिदं सर्वमान्यसूत्ररत्नमनायासेन सर्वे समधिगच्छेयुरिति निवेदयति–

श्रीमदुदयसमुद्रसूर्यन्तेवासी–

पन्न्यासऋद्धिमुनिः ।

# विषयानुक्रमणिका ।



इति विषयानुक्रमणिका ।

॥ श्रीजिनाय नमः ॥

श्रीमत्समयसुन्दरोपाध्यायविरचितदीपिकाव्याख्यासमेतं—

# श्रीदशवैकालिकसूत्रं प्रारभ्यते ॥



स्तम्भनाधीशमानम्य गणिः समयसुन्दरः । दशवैकालिके सूत्रे शब्दार्थं लिखति स्फुटम् १ धम्म इति-धर्मो दुर्गतिप्रपतज्जन्तुधारणालक्षण उत्कृष्टं प्रधानं मङ्गलं वर्तते, को धर्म इत्याह—अहिंसा, न हिंसा अहिंसा जीवदया प्राणातिपातविरतिरित्यर्थः, पुनः संयमः पञ्चाश्रवविरमणं, पञ्चेन्द्रियनिग्रहः चतुःकषायजयः, दण्डत्रयविरतिश्चेति सप्तदशभेदः, इत्येवंरूपः, पुनस्तप

**धम्मो मंगलमुक्किट्ठं अहिंसा संजमो तवो । देवा वि तं नमंसंति जस्स धम्मे सया मणो १.**

"अणसणमूणोअरिआ वित्तीसंखेवणं रसच्चाओ । कायकिलेसो संली—णया य वज्झो तवो होई १ पायच्छित्तं विणओ वेआवच्चं तहेव सज्झाओ ॥ झाणं उस्सग्गो वि य अब्भितरिओ तवो होई २" इति बाह्याभ्यन्तररूपं द्वादशधा. अथ धर्मकरणे माहात्म्यमाह—देवा अपि, अपिः संभावने, तं धर्मकारकं जीवं नमस्यन्ति, मनुष्यास्तु सुतरां, तं कं ? यस्य धर्मे धर्म

करणे सदा मनोन्त करणम् इति प्रथमगाथार्थ ॥ १ ॥ अथ यतीनामाहारग्रहणे विधिमाह—जहेति–यथा येन प्रकारेण द्रुमस्य वृक्षस्य पुष्पेषु भ्रमरो रसं मकरन्दमापिबति, परं न च नैव पुष्पं क्लामयति पीडयति स च भ्रमर आत्मानं प्रीणयति रसेनात्मान सन्तोषयति २ अथ दृष्टान्त उक्त, दार्ष्टान्तिकमाह–एवमनेन प्रकारेण एते श्रमणास्तपस्विन ते च न तापसादय, अत आह–कीदृशा श्रमणा ? मुक्ता बाह्यपरिग्रहेण आभ्यन्तरपरिग्रहेण च, मुक्ता, तत्र बाह्यपरिग्रहो धनधान्यादिरूपो नवविध, आभ्यन्तरपरिग्रहश्च–"मिच्छत्तं वेअतिगं हासाईयं छक्कग च नायव्वं । कोहाईण चउक्कं चउदस अब्भिंतरा

जहा दुमस्स पुप्फेसु भमरो आवियइ रस । ण य पुप्फ किलामेइ सो अ पीणेइ अप्पय २

एमेए समणा वुत्ता जे लोए संति साहुणो । विहंगमा व पुप्फेसु दाणभत्तेसणे रया ३

गठी१ "इत्यादिरूपस्ताभ्यो रहित, एते के ? ये श्रमणा लोकेऽर्धतृतीयद्वीपसमुद्रपरिमाणे सन्ति विद्यन्ते पुन कीदृशा श्रमणा ? साधवो ज्ञानादिसाधका, पुन कीदृशा विहङ्गमा इव भ्रमरा इव पुष्पेषु दानभक्तैषणे रता, दानग्रहणाद् गृहस्थैर्दत्त गृह्णन्ति परं नादत्तं, भक्तग्रहणात्तदपि तच्च प्रासुकं गृह्णन्ति, न आधाकर्मादि, एषणाग्रहणेन गवेषणादित्रयपरिग्रह, एषु त्रिषु स्थानेषु रताः सक्ता ३ अत्र कोऽप्याह—

१ एमेए इति क्वचित्पाठ । २ क्वचिदेकारघटित क्वचिदकार घटितः पाठ ।

—ननु साधवो दानभक्तैषणे रता इत्युक्तं, यतश्चैवं तत एव लोको भक्त्याकृष्टचित्तस्तेभ्यः साधुभ्य आधाकर्मादि ददाति, तस्य ग्रहणे जीवानां हिसा स्यात् आहारस्याग्रहणे तु स्ववृत्तेरलाभेन स्वदेहधारणं न स्यात्. अत्रोच्यते—वयमिति-वयं च वृत्ति लप्स्यामः प्राप्स्यामस्तथा यथा न कोऽप्युपहन्यते, तथा यथाकृतेषु गृहस्थैरात्मार्थं निष्पादितेष्वाहारादिषु साधवो रीयन्ते गच्छन्ति पुष्पेषु यथा भ्रमराः ४. अथ येन प्रकारेण साधवस्तथा चाह—महुगारेति—यतश्चैवमतस्ते मधुकरसम-भ्रमरतुल्याः साधवः, पुनः किंभूताः ? बुद्धा ज्ञाततत्त्वाः, एवंभूता ये भवन्ति भ्रमन्ति वा, पुनः किम्भूताः ? अनिश्रिताः, कुलादि

**वयं च वित्तिं लप्भामो न य कोइ उवहम्मइ । अहागडेसु रीयंते पुप्फेसु भमरा जहा ४. महुगारसमा बुद्धा जे भवंति अणिस्सिया । नाणापिंडरया दंता तेन बुच्चंति साहुणो त्ति बेमि५ पुप्फियज्झयणं सम्मत्तं१.**

ष्वप्रतिबद्धाः, पुनः किम्भूताः ? नानापिण्डरताः, नाना नानाप्रकारोऽभिग्रहविशेषात्प्रतिग्रहमल्पाल्पग्रहणाच्च पिण्ड आहारादिर-न्तप्रान्तादिर्वा, तस्मिन्नानापिण्डे रता उद्वेगं विना स्थिताः, पुनः किम्भूताः ? दान्ता इन्द्रियनोइन्द्रियदमनेन, उपलक्षणत्वादी-र्यादिसमिताश्च. ततश्चायमर्थः—यथा भ्रमरोपमया एषणासमितौ यतन्ते, तथेर्यादिष्वपि त्रसस्थावरभूतहितं यतन्ते, तेन साधवः परमार्थतः साधव इत्युच्यन्ते. इतिशब्दः समाप्तौ. ब्रवीम्यहं, परं न स्वबुद्ध्या, किन्तु तीर्थकरगणधराणामुपदेशेन. ५

इति श्रीदशवैकालिकशब्दार्थवृत्तौ श्रीसमयसुन्दरोपाध्यायविरचितायां द्रुमपुष्पिकाख्यं प्रथममध्ययनं समाप्तम्.

---

१ लप्स्यामह इति वक्तव्येपीद मूलस्थ पदमिति मन्तव्यम् । २ इन्द्रियाणिच नोइन्द्रिय चेति विग्रह' । ३ हिते इति भाति ।

–प्रथमाध्ययने धर्मप्रशंसा उक्ता, सा चैव जिनशासने इह तु अध्ययने जिनशासनेऽभ्युपगते सति माभूदभिनवदीक्षितस्य संयमे धृतिरतो धृतिमता भाव्यमित्येतदुच्यते, इत्यनेन सम्बन्धेनायातमिदमध्ययनं व्याख्यायते–कहमिति-कथं केन प्रकारेण, नुइति क्षेपे, यथा कथं नु स राजा यो न रक्षति प्रजाः, कथं नु स वैयाकरणो योऽपशब्दं प्रयुङ्क्ते, तथा कथं नु कुर्यात् श्रामण्यं श्रमणभाव, यः कामान्न निवारयति ? कारणमाह–श्रामण्यस्याकरणे पदे पदे स्थाने स्थाने विषीदन् विषाद प्राप्नुवन् संकल्पस्य वशं गतः, न केवलमयमधिकृतसूत्रोक्तो यथोक्तश्रामण्याभावेनाश्रमणः, किन्तु आजीविकादिभावेन प्रव्रजितः सङ्क्लिष्टचित्तो द्रव्यक्रिया

अथ श्रामण्यपूर्वकाध्ययनं प्रारभ्यते.

कह नु कुज्जा सामण्णं जो कामे न निवारए । पए पए विसीयंतो संकप्पस्स वसं गओ १
वत्थगंधमलंकारं इत्थीओ सयणाणि य । अच्छंदा जे न भुंजंति न से चाइ त्ति वुच्चइ २

कुर्वन्नप्यश्रमण एव १ अयोग्य एव कथं ? यत आह—वत्थेति–वस्त्राणि चीनांशुकादीनि, गन्धाः कोष्ठपुटादयः, अलङ्काराः कटकादयः, अनुस्वारोऽलाक्षणिकः, स्त्रियोऽनेकप्रकाराः, शयनानि पर्यङ्कादीनि, चशब्दादासनादीनि एतानि वस्त्रादीनि किम् ? अच्छन्दा अस्ववशा ये केचन न भुञ्जते नासेवन्ते, न स त्यागीत्युच्यते, न स श्रमण इति (अत्र सूत्रगतेर्विचित्रत्वाद्बहुवचनेऽप्येकवचननिर्देशः) २ यथा च श्रमणो भवति तथा कथयितुमाह—

जे इति–य एव कान्तान् शोभनान् प्रियान् इष्टान् भोगान् शब्दादिविषयान् लब्धान् सतः, 'विपिट्ठि कुव्वइत्ति' कोऽर्थः? विविधमनेकप्रकारैः शुभभावनादिभिः पृष्ठतः करोति परित्यजति न बन्धनेन बद्धः प्रोषितो वा, किन्तु स्वाधीनः, न परायत्तः, स्वाधीनानेव परित्यजति भोगान्. ततश्च य ईदृशः, हुशब्दोऽवधारणार्थे, स एव त्यागीत्युच्यते, भरतादिवत्. ३. समाईति–समया आत्मपरतुल्यया प्रेक्षया दृष्ट्या परिव्रजतः, परि समन्ताद् व्रजतो गच्छतः, गुरोरुपदेशदानेन संयमयोगेषु वर्तमानस्य, एवंविधस्य त्यागिनोऽपि स्यात्कदाचिदचिन्त्यत्वात् कर्मगतेर्मनोन्तःकरणं निस्सरति बहिर्धावति, केन? भुक्तभोगिनः

**जे य कंते पिए भोए लध्धे विपिट्ठि कुव्वइ। साहीणे चयई भोए से हु चाइत्ति वुच्चइ ३. समाइ पेहाइ परिव्वयंतो सिया मणो निस्सरई बहिद्धा। न सा महं नोवि अहं वि तीसे इच्चेव ताओ विणइज्ज रागं ४.**

पूर्वक्रीडितस्मरणादिना, अभुक्तभोगिनश्च कुतूहलादिना, बहिर्धा संयमगेहाद्बहिरित्यर्थः, तदा सोऽशुभोऽध्यवसायः, प्रशस्ताध्यवसायेन स्थगनीयः, केनालम्बनेन इत्याह–यस्यां राग उत्पन्नस्तां प्रति चिन्तनीयं न सा मम मदीया, नाप्यहं तस्याः, पृथक्कर्मभुजो हि प्राणिन इत्येवं, ततस्तस्याः सकाशाद्व्यपनयेद्रागं, तत्त्वदर्शिनो हि संनिवर्तन्त एव ४. एवं तावदान्तरो मनोनिग्रहविधिरुक्तः, न चायं विधिर्बाह्यमंतरेण कर्तुं शक्यते, अतो बाह्यविधिविधानार्थमाह—

१ लाभेनेति भाव. ।

आयापयाहीति–' आयावयाही ' त्वं संयमगृहा मनसोऽनिर्गमनार्थमातापय ? आतापनां कुरु ? उपलक्षणत्वाद्यथानुरूपम् नोदरिकादितपोऽपि कुरु ? तथा त्यज सौकुमार्यं सुकुमारत्वं परित्यज ? यतः सुकुमारत्वात्कामेच्छा प्रवर्तते, योषितां च प्रार्थनीयो भवति, एवमुभयासेवनेन कामान् क्राम उल्लङ्घय ? यतस्तैः कामैः क्रान्तैर्दुःखं क्रान्तमेव भवति, अत्र वणिज उदाहरणं ज्ञेय इति , अथान्तरकामक्रमणविधिमाह–छिन्धि द्वेषं ? व्यपनय रागं ? सम्यग्ज्ञानबलेन विपाकालोचनादिना, एवं कृते फलमाह–एवमनेन प्रकारेण प्रवर्तमानः सन् सुखी भविष्यसि क्व ? संपराये संसारे यावन्मोक्षं न प्राप्स्यसि तावत्सुखी

आयावयाही[1] चय सोगमल्लं कामे कमाही कमियं खु दुक्खं। छिंदाहि दोसं विणएज्ज रागं एवं सुही होहिसि संपराए ५. पक्खंदे जलियं जोइं धूमकेउं दुरासयं। नेच्छंति वंतयं भोत्तुं कुले जाया अगंधणे ६

भविष्यसि ५. संयमगृहान्मनस एवानिर्गमार्थमिदं चिन्तयेत्—पक्खंद इति–प्रस्कन्दन्ति आश्रयन्ति, कं ? ज्योतिषमग्निं, किंविशिष्टं ज्योतिषं ? ज्वलितं ज्वालामालाकुलं, न तु मुर्मुरादिरूपं, पुनः किंविशिष्टं ज्योतिषं ? धूमकेतुं, धूमचिह्नं धूमध्वजम्, न उल्कादिरूपं, पुनः किंविशिष्टं ज्योतिषं ? दुरासदं दुरभिभवं, चशब्दलोपात्र च इच्छन्ति वान्तं भोक्तुं परित्यक्तं विषमिति शेषः, के ? नागा इति शेषः, ते किंविशिष्टा नागाः ? कुले जाताः समुत्पन्नाः, किंभूते कुले ? अगन्धने, नागा द्वेधा, गन्धना अगन्धनाश्च तत्र ये गन्धनास्ते–डसिए मतेहिं आकड्डिआ, तं मुहओ आपिअति अगंधणा पुण अवि मरणमज्झसम्मति

न य वंतं आपिअंति. उपसंहारस्तु—यदि तावत्तिर्यञ्चोऽप्यभिमानाज्जीवितं परित्यजंति, न च वान्तं भुंजते, तत्कथमहं जिनवचनाभिज्ञो विपाकदारुणान् विषयान् वान्तानपि भोक्ष्य इति. अत्रार्थे रथनेमिदृष्टान्तस्तथाहि—जया किल अरिट्ठनेमी पव्वइओ, तया रहनेमी तस्स जिठभाओ राईमई उवयरइ, जइ नाम एसा मम होइ, सा य भगवई निव्विन्नकामभोगा नायं च तीए जहा एसो मम अज्झोववण्णो, अण्णया य तीए. महुघयसंजुत्ता पेज्जा पीआ, रहनेमी आगओ, मयणफलं मुहे काओण तीए वंतं भणियं च, पेज्जं पियाहि, तेण भणियं कहं वंतं पिज्जइ. तीए भणिओ जइ न पिज्जइ, तओ अहंपि अरिट्ठनेमिसामिणा वंता कहं पिविउमिच्छसि. ६. अथाधिकारापन्नमेवार्थमाह—धिगत्थु इति—तत्र राजिमती किल एवमुक्तवती रथनेमि प्रति—धिगस्तु

**धिगत्थु ते जसोकामी जो तं जीवियकारणा। वंतं इच्छसि आवेउं सेयं ते मरणं भवे ७.**

भवतु ते तव पराक्रममिति शेषः. हे यशःकामिन्! कीर्तिरभिलाषिन्! इति रोषेण क्षत्रियामन्त्रणम्. अथवा अकारप्रश्लेषात् हे अयशःकामिन्! धिगस्तु भवतु तव, यस्त्वं जीवितकारणादसंयमजीवितहेतोर्वान्तमिच्छसि आपातुं भगवता परित्यक्तां भोक्तुमिच्छसि, अतः श्रेयस्ते तवातिक्रान्तमर्यादस्य मरणं भवेत्, शोभनतरं तव मरणं, न पुनरिदमकर्मासेवनं, तओ धम्मो से कहिओ. संबुद्धो पव्वइओ अ राइमई वि तं बोहि ऊण पव्वइआ अन्नया कयाइ सो रहनेमी बारवइओ भिक्खं गहिऊण सामिसगासं आगच्छंतो वासवद्दलएण अप्भाहओ एगं गुहं पविट्ठो, राइमई वि सामिणो वंदणाए गया, वंदित्ता पडिस्सयमागच्छंती य अंतरा वरिसिएण भिन्ना अयाणंती तमेव गुहं अणुपविट्ठा जत्थ सो रहनेमी, दिट्ठा

य तेण सोहगा एसा वच्छाणि अपसारिआणि, ताहे तीसे अंगपच्चगाणि दिट्ठाणि, सो रहनेमी तीए असोववन्नो दिट्ठो, अणाए अंगिआगारकुसलाए णाओ अ असोहणो भावो एअस्स ७ ततः सा तमिदमवादीत्—अहमिति—अहं च भोगराज्ञः उग्रसेनस्य तु पुत्रीति शेषः, त्वं चासि अन्धकवृष्णेः समुद्रविजयस्य पुत्र इति शेषः, अतः कारणान्मा एकैकप्रधानकुले आवां गन्धनौ भूव, अतः कारणात्संयमं सर्वदुःखनिवारणं क्रियाकलापं निभृतः सव्याक्षिप्तः सन् चर कुर्विस्त्यर्थः ८ जईति—यदि त्वं करिष्यसि भावमभिप्रायं प्रार्थनारूपं, क ? या या द्रक्ष्यसि नारीः स्त्रियः तासु, एताः शोभना, एताश्च शोभनतराः, (सेव)

अहं च भोगरायस्स तं चेसि अंधगविह्णिणो । मा कुले गंधणा होमो संजमं निहुओ चर ८

जइ तं काहिसि भावं जा जा दिच्छसि नारिओ । वायाविद्धुव्व हडो अट्ठिअप्पा भविस्ससि ९

तीसे सो वयणं सोच्चा संजयाइ सुभासियं । अंकुसेण जहा नागो धम्मे संपडिवाइओ १०

इत्येवंभूतं भावं यदि करिष्यसि ततो वाताविद्ध इव वातप्रेरित इव हडोऽबद्धमूलो वनस्पतिविशेषः अस्थितात्मा भविष्यसि कोऽर्थः ? सकलदुःखक्षयकारकेषु संयमगुणेष्वबद्धमूलत्वात्संसारसागरे प्रमादपवनप्रेरित इतश्चेतश्च पर्यटिष्यसि ९ तीसे इति—तस्या राजिमत्या असौ रथनेमिर्वचनं पूर्वोक्तं श्रुत्वा, किंविशिष्टाया राजिमत्याः ? संयताया गृहीतदीक्षायाः, किंविशिष्टं

१ चाचीति क्वचित् पा

वचनं ? सुभाषितं संवेगजनकं, किंवत् ? अङ्कुशेन यथा नागो हस्ती, एवं धर्मे सम्प्रतिपादितो धर्मे स्थापित इत्यर्थः. १०

एवमिति–एवं कुर्वते कुर्वन्ति, के ? संबुद्धा बुद्धिमन्तः, अथवा सम्यग्दर्शनसहितेन ज्ञानेन ज्ञातविषयस्वभावाः सम्यग्दृष्टय इत्यर्थः, पुनः किंविशिष्टाः ? पण्डिता वान्तभोगासेवनदोषज्ञाः, पुनः किंविशिष्टाः ? प्रविचक्षणाः पापभीरवः, किं कुर्वन्ति ते इत्याह–निवर्तन्ते दूरीभवन्ति, केभ्यः ? भोगेभ्यो विषयेभ्यः, क इव ? यथासौ पुरुषोत्तमो रथनेमिः, शिष्य आह–ननु कथं तस्य पुरुषोत्तमत्वं यो हि गृहीतदीक्षोऽपि विषयाभिलाषी जातः ? उच्यते–तथाविधेऽभिलाषे जातेऽपि नासौ प्रवृत्तः, कापुरुषस्तु

एवं करंति संबुद्धा पंडिया पवियक्खणा । विणियट्टंति भोगेसु जहा से पुरिसुत्तमो त्तिबेमि ११.

सामन्नपुव्वियज्झयणा संमत्ता २.

संजमे सुठियप्पाणं विप्पमुक्काण ताइणं । तेसिमेयमणाइन्नं निग्गंथाण महेसिणं १.

तदनुरूपं चेष्टत एवेति. इति पूर्वोक्तप्रकारेण ब्रवीमि, न स्वबुद्ध्या, किन्तु तीर्थकरगणधराणामुपदेशेन. ११.
इति श्रीदशवैकालिकशब्दार्थवृत्तौ श्रीसमयसुन्दरोपाध्यायविरचितायां द्वितीयमध्ययनं समाप्तम् । व्याख्यातं श्रामण्यपूर्वकाख्यं द्वितीयमध्ययनं, क्षुल्लकाचारकथाख्यमथ तृतीयमध्ययनमारभ्यते, अस्य चायमभिसम्बन्धः–द्वितीयाध्ययने इत्युक्तं नवदीक्षितेन संयमेऽधृतावुत्पन्नायामपि धृतिमता भाव्यम्. अत्र तु सा धृतिराचारे कार्या, न त्वनाचारे, अयमेवात्मसं-

यमोपाय उक्तं च–"तस्यात्मा सयतो यो हि सदाचारे रत सदा । स एव धृतिमान् धम–स्तस्यैव हि जिनोदित १ " इत्यनेन सम्बन्धेनायातमिदमध्ययन व्याख्यायते–तत्रसूत्रम्-संयमेइति सयमे सुस्थित शोभनप्रकारेण सिद्धान्तरीत्या स्थित आत्मा यषां तषां, किंविशिष्टानां? विप्रमुक्तानां विविधमनेकप्रकारै प्रकर्षेण संसारान्मुक्तानां, पुन किंविशिष्टानां? तायिनां, त्रायते आत्मान परमुभयं च ये ते त्रातारस्तेषाम्, आत्मानं प्रत्येकबुद्धाः, परं तीर्थकरा, उभयं स्थविरा, तेषामिदं वक्ष्यमाणलक्षणमनाचीर्ण मनाचरितमकल्पं, केषामित्याह–निर्ग्रन्थानां साधूनां, किंविशिष्टानां? महर्षीणां महतां यतीनाम् १ सांप्रत यत्सूत्राक्तमनाचरित तदेवाह—उद्देसियमिति–साधुमुद्दिश्यारम्भेण प्रथमौद्देशिक—( १ ) क्रयणं साध्वादिनिमित्त क्रीतं तेन कृत निर्वर्तितं क्रीतकृतं

उद्देसियं कीयगडं नियागमभिहडाणि य । राइभत्ते सिणाणे य गधमल्ले य वीयणे २

( २ ) नियागमामंत्रितस्य पिण्डस्य ग्रहणं ( ४ ) अभिहृत स्वकीयग्रामाद साधुनिमित्तमभिमुखमानीतमभ्याहृतं, बहुवचन स्वग्रामपरग्रामनिशीथादिभेदस्यापनार्थ ५ रात्रिभुक्तं रात्रिभोजनं, दिवसगृहीत दिवसभुक्त रात्रौ सन्निधिरक्षणेन, दिवस गृहीतं रात्रिभुक्तं, रात्रौ गृहीतं दिवसभुक्तं, रात्रौ गृहीतं रात्रौ भुक्तम् इति भेदचतुष्टयलक्षण स्नान देशसर्वभेदभिन्न, तत्र देश स्नानं शौचातिरेकेणाक्षिपक्ष्मप्रक्षालनमपि सर्वस्नानं तु प्रतीतमेव गन्धमाल्यं च गन्धग्रहणात्कोष्टपुटादिपरिग्रह माल्यग्र णाच्च ग्रथितवेष्टितादेर्माल्यस्य परिग्रह वीजनमुष्णकाले तालवृन्तादिना, इत्यनाचरितं दोषाश्चेहारम्भप्रवर्तनादय स्वय मुह्या सुध्या २ पुनरिदमनाचरितम्—

संनिहीति–सन्निधीयतेऽनेनात्मा दुर्गताविति सन्निधिः, गुडघृतादीनां सञ्चयकरणं, गृहमत्रं च गृहस्थभाजनं, राजपिण्डश्च नृपाहारः, किमिच्छसीत्येवं यो दीयते स किमिच्छकः, राजपिण्डोऽन्यो वा सामान्येन, तथा संबाधनमास्थिमांसत्वग्रोमसुखतया चतुर्विधं मर्दनं, दन्तप्रधावनं चाङ्गुल्यादिना मुखक्षालनं, संप्रश्नः सावद्यो गृहस्थविषयः, शोभार्थ कीदृशो वाहमित्यादिरूपः, देहप्रलोकनं चादर्शादौ, अनाचीरतदोषाश्च सन्निधिप्रभृतिषु परिग्रहप्राणातिपातादयः स्वबुद्ध्या वाच्याः ३. किञ्च—

अट्ठावय इति–अष्टापदमित्यष्टापदं द्यूतमर्थपदं वा गृहस्थमधिकृत्य निमित्तादिविषयमनाचरितं, तथा नालिका चेति

**संनिहीगिहिमत्ते य रायपिंडे किमिच्छए। संबाहणंदंतपहोयणा य संपुच्छणे देहपलोयणा य ३.**

**अट्ठावए य नालीए छत्तस्स य धारणट्ठाए। तेगिच्छं पाहणाप्पाए समारंभं च जोइणो ४.**

द्यूतविशेषलक्षणा, यत्र माभूत्कलयान्यथा? पाशकपातनमिति नालिकया पात्यन्त इति, इयं चानाचरितं. छत्रस्य धारणमात्मानं परं वा प्रति अनर्थायेति. आगाढग्लानाद्यालम्बनं मुक्त्वानाचरितं, प्राकृतशैल्यात्रानुस्वारलोपः, अकारणकारलोपौ च द्रष्टव्यौ, तथा श्रुतिप्रामाण्यादिति. 'तेगिच्छंति' चिकित्साया भावश्चैकित्स्यं व्याधिप्रतिक्रियारूपमनाचरितम्. उपानहौ पादयोरनाचरिते, पादयोरिति साभिप्रायकं, न त्वापत्कल्पपरिहारार्थमुपग्रहधारणेन. समारम्भश्च समारम्भणं ज्योतिषो वह्नेः. दोषाश्चाष्टापदादीनां सुगमा एवेति. ४.

सिज्जेति–शय्यातरपिण्डोऽप्यनाचरित', शय्या वसतिस्तया तरति संसारमिति शय्यातर, साधूनां वसतिदाता तस्य पिण्ड', आसवकपर्यङ्कौ लोकप्रसिद्धावनाचरितौ तथा गृहान्तरनिषद्या गृहमेव गृहान्तर गृहयोर्वा अपा(वा)न्तरालं तत्रोपवेशन वक्ष्यमाणदोषात्पाटकादिपरिग्रह तथा गात्रस्य कायस्योद्वर्तनानि पद्मकापनयनलक्षणानि, चशब्दादन्यसंस्कारपरिग्रह ५

गिहिणो इति–पुनर्गृहिणो गृहस्थस्य वैयावृत्य, व्यापृतस्य भावो वैयावृत्त्यं गृहस्थ प्रत्यन्नादिसंपादनमित्यर्थ' तथा

सिज्जायरपिंड च आसदीपलियकए । गिहिंतरनिसिज्जा य गायस्सुव्वट्टणाणि य ५

गिहिणो वेआवडिय जा य आजीववत्तिया । तत्तानिव्वुडभोइत्तं आउरस्सरणाणि य ६

या चाजीववृत्तिता जातिकुलगणकर्मशिल्पानामाजीवनमाजीव', तेन वृत्तिराजीववृत्ति, तस्या भाव आजीववृत्तिता जात्याद्याजीवनेनात्मपालनमित्यर्थ तप्तानिर्वृतभोजित्व, तप्तं च तदनिर्वृतं तप्तानिर्वृत, अत्रिदण्डोद्वृतं चेति' समास' उदकमिति शेष, तस्य भोजित्वं मिश्रसचित्तोदकभोजित्वमित्यर्थ' तथा आतुरस्मरणानि च क्षुधादिनातुराणां पीडितानां पूर्वोपभुक्तस्मरणानि अथवा दोषातुराणामाश्रयदानादीनि ६

२ इदं निवृत्तिमित्यस्याग्रे प्रश्नम् । समासो विग्रह ।

मूलए इति–पुनर्मूलको लोके प्रतीतः, शृंगबेरमार्द्रकं, इक्षुखंडं च लोकप्रतीतम्, अनिर्वृतग्रहणं सर्वत्राभिसंबद्धचते, इक्षुखण्डं चापरिणतं द्विपर्वान्तं यद्वर्तते, कन्दो वज्रकन्दादिः, मूलं च सट्टामूलादि सचित्तं, फलं कर्कटचादि, त्रिपुषादि, बीजं च तिलादि, किंविशिष्टं बीजम् ? आमकं सचित्तम्. ७. सोवच्चले इति–पुनः सौवर्चलं, सैन्धवं पर्वतैकदेशजातं, लवणं च सांभरलवणं, रुमालवणं च खानिलवणं, एतत्सर्वमामकं सचित्तमनाचरितं, सामुद्रं लवणमेव, पांशुक्षारश्चोपरलवणं, कृष्णलवणं पर्वतैकदे-

मूलए सिंगबेरे य इच्छुखंडे अनिव्वुडे । कंदे मूले य सच्चित्ते फले बीए य आमए ७.

सोवच्चले सिंधवे लोणे रोमालोणे य आमए । सामुद्दे पंसुखारेय कालालोणे य आमए ८.

धूवणेत्ति वमणे य बच्छीकस्माविरेयणे । अंजणे दंतवण्णे य गायाभंगविभूषणे ९.

सव्वमेयमणाइन्नं निग्गंथाण महेसिणं । संजमम्मि य जुत्ताणं लहुभूय विहारिणं १०.

शजातं, सर्वमामकं ज्ञेयम्. ८. धूवणेति–धूपनमात्मवस्त्रादेः सौगन्ध्यनिमित्तमथवाऽनागतव्याधिनिवृत्तिनिमित्तं धूमपानमित्यन्ये व्याख्यानयंति, वमनं च मदनफलादिना वान्तिः, तथा बस्तिकर्म पुण्ड्रकेणाधिष्ठाने स्नेहदानं. विरेचनं दन्त्यादिना, तथाञ्जनं रसाञ्जनं. दन्तकाष्ठं च प्रतीतमेव. तथा गात्राभ्यङ्गस्तैलादिना. विभूषणं गात्राणामेव. ९. अथ क्रियासूत्रमाह—सव्वमिति–सर्वमेतत्पूर्वोक्तचतुःपंचाशद्भेदभिन्नमौद्देशिकादिकं यदनन्तरमुक्तं तत्सर्वमनाचरितं ज्ञातव्यं. केषामित्याह-

निग्र'थानां महर्षीणां साधूनामित्यर्थः किम्भूतानां ? चशब्दात्तपसि युक्तानां, पुनः किंभूतानां ? लघुभूतविहारिणां, लघुभूतो वायुस्तद्वदप्रतिबद्धतया विहारो येषां ते १० किमित्यनाचरित यतस्त एवंभूता भवन्तीत्याह—पंचासवेति-किंभूतास्ते साधवः ? पंच च त आश्रवाश्च पंचाश्रवा हिंसादयः, परि समन्ताद्ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया प्रत्याख्याता यैस्ते पंचाश्रवपरिज्ञाता, यतः कारणात्त एवंभूताः, अतएव त्रिगुप्ता मनोवाक्कायगुप्तिभिर्गुप्ता, पुनः किंभूता ? छसु संजया षट्सु जीवनिकायेषु पृथिव्यादिषु सामस्त्येन यता यत्नवंत, पुनः किं० ? पंचनिग्रहणाः, पंचानामिंद्रियाणां निग्रहणा निरोधकर्तारः,

पंचासवपरिण्णाया तिगुत्ता छसु संजया । पंचनिग्गहणा धीरा निग्गंथा उज्जुदंसिणो ११

आयावयंति गिम्हेसु हेमंतेसु अवाउडा । वासासु पडिसंलीणा संजया सुसमाहिया १२

पुनः किंभूता ? धीरा बुद्धिमन्तः स्थिरा वा, पुनः किंभूताः साधवः ? ऋजुदर्शिनः, ऋजुर्मोक्षं प्रति ऋजुत्वात्संयमस्तं पश्यन्ति उपादेयतया इति ऋजुदर्शिनः संयमप्रतिबद्धाः ११ ते ऋजुदर्शिनः कालं प्रस्तावमधिकृत्य यथाशक्ति एवं कुर्वन्ति, तथाहि—आयांति—आतापयन्त्यूर्ध्वस्थानादिनाऽऽतापनां कुर्वन्ति, कदा ? ग्रीष्मेषूष्णकालेषु, पुनः कीदृशाः ? हेमन्तेषु शीतकालेष्वप्रावृता प्रावरणरहितास्तिष्ठन्ति, तथा वर्षासु वर्षाकालेषु प्रतिसंलीना एकाश्रयस्था भवन्ति, संयताः साधवः, पुनः किंभूताः ? सुसमाहिता ज्ञानादिषु यत्नपराः १२

परीति-पुनः किम्भूताः ? परीषहा एव रिपवस्ते दान्ता उपशमं नीता यैस्ते, पुनः किंभूताः ? धूतो मोहोऽज्ञानं यैस्ते, पुनः किभूताः ? जितेन्द्रियाः शब्दादिविषयेषु रागद्वेषरहिताः, त एवंविधाः सर्वदुःखक्षयनिमित्तं प्रक्रामन्ति प्रवर्तन्ते. किंभूताः ? महर्षयः १३. अथैतेषां फलमाह—दुक्करेति-एवं दुष्कराण्यौद्देशिकादित्यागादीनि कृत्वा, तथा दुस्सहान्यातापनादीनि सहित्वा केचिद्देवलोकेषु सौधर्मादिषु गच्छन्तीति शेषः. केचन सिद्धयन्ति, तेनैव भवेन सिद्धिं प्राप्नुवन्ति. किंभूताः ? नीरया निर्गतं रजोऽष्टविधं कर्म येभ्यस्तेऽष्टविधकर्मविप्रमुक्ताः, न त्वेकेन्द्रिया इव कर्मयुक्ताः. १४ ये चैवंविधानुष्ठानतो देवलोकेषु गच्छन्ति

परीसहरिओदंता धूअमोहा जिइंदिया । सव्वदुक्खपहीणट्ठा पक्कमंति महेसिणो १३.

दुक्कराइं करित्ताणं दुस्सहाइं सहेत्तु य । केइत्थ देवलोएसु केइ सिज्झंति नीरया १४.

खवित्ता पुव्वकम्माइं संजमेण तवेण य । सिद्धिमग्गमणुप्पत्ता ताइणो परिणिव्वुडे त्तिबेमि १५.

इइ खुड्डुयायारकहज्झयणा तइआ ३.

तेऽपि ततश्च्युत्वार्यदेशे सुकुले जन्म प्राप्य शीघ्रं सिद्धयन्त्येव. एतदाह-खवित्तेति-ते देवलोकात् क्षपयित्वा कर्माण्यवशिष्टानि, केनेत्याह-संयमेनोक्तरूपेण सप्तदशभेदेन, पुनस्तपसा द्वादशविधेन सिद्धिमार्गं सम्यग्दर्शनादिलक्षणमनुप्राप्ताः सन्तस्त्रातार आत्मादीनां परिनिर्वान्ति सिद्धिं प्राप्नुवन्ति. इति ब्रवीमि न स्वबुद्धया किन्तु तीर्थकरगणधराणामुपदेशेन. १५.

इति श्रीदशवैकालिकशब्दार्थवृत्तौ श्रीसमयसुन्दरोपाध्यायविरचितायां क्षुल्लकाचारकथाख्यं तृतीयमध्ययनं समाप्तम्.

व्याख्यातं क्षुल्लकाचारकथाख्यं तृतीयमध्ययनम्—अथ चतुर्थं षड्जीवनिकायाख्यमध्ययनं व्याख्यायते—एवाऽस्याध्ययनेनास्या ध्ययनस्यायं सम्बन्धः—इह साधुनाऽऽचारे धृतिः कार्या, न त्वनाचार इत्युक्तम्—अयमेव चात्मसंयमे उपायः, स चाचारः षड्जीवनिकायगोचरः, अतः षड्जीवनिकायाः प्रोच्यन्ते—तत्र सूत्रम् सुअमिति-श्रुतमवधारितं मे इति मया अत्र श्रीसुधर्मस्वामी जम्बूस्वामिनं प्राह—हे आयुष्मन् ! आयुरस्यास्तीत्यायुष्मान् तस्य संबुद्धिः, तेन जगत्प्रसिद्धेन भगवता समग्रैश्वर्यादियुक्तेन श्रीवर्धमानस्वामिना एवमकारं वक्ष्यमाणमाख्यातं, केवलज्ञानेनोपलभ्य कथितम् अथवा 'आउसंतेणंति' समग्रं भगवतो विशेषणं, किंभूतेन भगवता ?

सुअं मे आउसंतेणं भगवया एवमक्खायं इह खलु छज्जीवणिया नामज्झयणं समणेणं भगवया महावीरेणं कासवेणं पवेइआ सुअक्खाया सुपन्नत्ता सेअं मे अहिज्जिउं अज्झयणं धम्मपन्नत्ती

'आउसंतेणं' आयुष्मता चिरजीविना इत्यर्थः, मङ्गलवचनमेतत् अथवा 'आवसंतेणंति पाठे मयेत्यस्य विशेषणं, किंभूतेन मया ? आवसता गुरुपादमूलसेविना अथवा 'आमुसंतेणंति' पाठे किंभूतेन मया ? आमृशता भगवत्पादारविन्दयुगलं मस्तकेन, अनेन गुरुविनयप्रतिपत्तिरुक्ता किंभूतेन भगवता आख्यातमिति पृष्टे आह—एषा खलु षड्जीवनिकानामाध्ययनं श्रमणेन महातपस्विना भगवता-समग्रैश्वर्यादियुक्तेन महावीरेण कषायादिवैरिजयान्महासुभटेन किंभूतेन ? काश्यपेन काश्यपगोत्रेण प्रवेदिता ज्ञाता, न कुतश्चिदाकर्ण्य ज्ञाता, किन्तु स्वयमेव केवलज्ञानेन प्रकर्षेण विदिता ज्ञाता पुनः स्वाख्याता, सुष्ठु द्वादशप

र्पन्मध्ये आख्याता, तथा सुप्रज्ञप्ता, यथैव व्याख्याता तथैव सूक्ष्मपरिहारासेवनेन प्रकर्षेण सम्यगासेवितेत्यर्थः. तां चैवंभूतां षड्जीवनिकां श्रेयो मे ममाध्येतुं, श्रेयः पथ्यं हितं पठितुं श्रोतुं भावयितुं. कुत इत्याह—अध्ययनं धर्मप्रज्ञप्तिः, " निमित्तकारणहेतुषु सर्वासां प्रायो दर्शनम् " इति वचनात् हेतौ प्रथमा, अध्ययनत्वादध्यात्मानयनाच्चेतसो विशुद्ध्यापादनं, चेतोविशुद्ध्यापादनाच्च श्रेय आत्मनोऽध्येतुमिति. अन्ये व्याचक्षते—अध्ययनं धर्मप्रज्ञप्तिरिति पूर्वमुपन्यस्तस्याध्ययनस्यैवोपादेयतयानुवादमा-

कयरा खलु सा छज्जीवणिया नामज्झयणं समणेणं भगवया महावीरेणं कासवेणं पवेइआ सुअक्खाया सुपन्नत्ता सेयं मे अहिज्जिउं धम्मपन्नत्ती. इमा खलु सा छज्जीवणिया नामज्झयणं समणेणं भगवया महावीरेणं कासवेणं पवेइआ सुअक्खाया सुपन्नत्ता. सेयं मे अहिज्जिउं अज्झयणं धम्मपन्नत्ती. तं जहा--पुढविकाइया आउकाइया तेउकाइया वाउकाइया वणस्सइकाइया तसकाइया

त्रम्. १. ततः शिष्यः प्राह—कयरेति—उक्तार्थमेव. अनेनैतद्दर्शयति—मानं त्यक्त्वा संवेगिना शिष्येण सर्वकार्येष्वेवं गुरुः प्रष्टव्यः. अथ शिष्येण प्रश्ने कृते गुरुराह—' इमेति ' एतत्सूत्रमपि उक्तार्थमेव, अनेनाप्येतद्दर्शयति—गुणवते शिष्याय गुरुणापि उपदेशो दातव्य एव. अथ षड्जीवनिकायमाह—

तद्यपति–उदाहरणं, पृथिवी काठिन्यलक्षणा मतीता, सैव काय' शरीर येषां ते पृथिवीकाया , पृथिवीकाया एव पृथिवीकायिका आपो द्रवा मतीता एव, ता एव काय' शरीरं येषां तेऽप्काया अप्काया एव अप्कायिका', तेज उष्णस्पर्शलक्षणं मतीतं, तदेव काय' शरीरं येषां ते तेज'काया' तेज'काया एव तेज'कायिका' वायुश्चलनधर्मा मतीत एव, स एव काय' शरीरं येषां ते वायुकाया', वायुकाया एव वायुकायिका', वनस्पतिर्लतादिरूप' मतीत॰, स एव काय' शरीरं येषां ते वनस्पतिकायास्त एव वनस्पतिका-

पुढवि चित्तमतमक्खाया अणेगजीवा पुढोसत्ता अन्नच्छ सच्छपरिणएण आउ चित्तमतमक्खाया अणेगजीवा पुढोसत्ता असच्छ सच्छपरिणएण तेउ चित्तमतमक्खाया अणेगजीवा पुढोसत्ता अन्नच्छ सच्छपरिणएण वाउ चित्तमतमक्खाया अणेगजीवा पुढोसत्ता अन्नच्छ सच्छपरिणएणं वणस्सइ चित्तमंतमक्खाया अणेगजीवा पुढोसत्ता अन्नच्छ सच्छपरिणएण

यिका' एव त्रसनशीलास्त्रसा' मतीता एव, त एव काया' शरीराणि येषां ते त्रसकाया', त्रसकाया एव त्रसकायिका इह च सर्वभूताधारत्वात्पृथिव्या' प्रथमं पृथिवीकायिकानामभिधानं विप्रतिपत्तिनिरासार्थं पुनराह—' पुढवी चित्तमंतमक्खाया ' पृथिवी चित्तं च जीवलक्षणं, तदस्या अस्तीति चित्तवती सजीवेत्यर्थ' पाठान्तरं वा—'पुढवी चित्तमत्तमक्खाया ' अत्र मात्रशब्द' स्तोकवाची, यथा सर्षपत्रिभागमात्रं, पृथिवी चित्तमात्रा स्तोकचित्ता इत्यर्थ' तथा च प्रबलमोहोदयात्सर्वजघन्य

चैतन्यमेकेन्द्रियाणां, तदधिकं द्वीन्द्रियाणामिति. आख्याता सर्वज्ञेन कथिता, किंविशिष्टा पृथिवी ? अनेकजीवा अनेके जीवा यस्यां सा अनेकजीवा, न पुनरेकजीवा यथा वैदिकानां पृथ्वी देवता इत्येवमादिवचनप्रामाण्यादिति. तथानेकजीवापि कैश्चिदेकभूतात्मापेक्षया मन्यते. यदाहुरेके-"एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् १. अत एवाह-किंभूता पृथिवी ? 'पुढोसत्ता' पृथक्सत्त्वाः प्राणिनो यस्यां सा पृथक्सत्त्वा अङ्गुलस्यासंख्येयभागमात्रावगाहनैरनेकैः पार्थिवजीवैः समाश्रितेति भावः आह-यद्येवं जीवपिण्डरूपा पृथिवी, तदा तस्यामुच्चारादिकरणेन नियमतस्तन्मरणादहिंसाया अनुत्पत्तिः स्यात्, तथा च सति साधुधर्मस्यासंभवः स्यात्. अतोऽत्राह--अन्यत्र शस्त्रपरिणतायाः, शस्त्रपरिणतां पृथिवीं विहायान्या पृथिवी, चित्तवत्याख्याता इत्यर्थः पृथिव्याः शस्त्रं त्रिधा--स्वकायशस्त्रं, परकायशस्त्रं, तदुभयशस्त्रं, च तत्र स्वकायशस्त्रं यथा-कृष्णमृद् नीलादिमृदः शस्त्रम्, एवं गन्धरसस्पर्शसंभेदेऽपि शस्त्रयोजना कार्या. परकायशस्त्रं यथा-अप्तेजःप्रभृतीनां पृथिवी, अथवा पृथिव्या अप्तेजःप्रभृतयः. तदुभयं यथा-कृष्णमृदुदकस्य पाण्डुमृदश्च परस्परस्पर्शगन्धादिभिः. यदा कृष्णमृदा कलुषितमुदकं भवति तदैषा कृष्णमृदुदकस्य पाण्डुमृदश्च शस्त्रं भवति. एवं च परिणतायां पृथिव्यामुच्चारादिकरणेऽपि नास्ति तन्मरणं, ततोऽहिंताधर्मः साधूनां संभवत्येव. एवमापश्चित्तवत्य आख्याताः, तेजश्चित्तवदाख्यातं, वायुश्चित्तवानाख्यातः, वनस्पतिश्चित्तवानाख्यात इत्याद्यपि द्रष्टव्यम् ४.

इदानीं वनस्पतिजीवानां विशेषभेदप्रतिपादनार्थमाह—

तमिति–अग्रं बीजं येषां तेऽग्रबीजाः कोरण्टकादयः, एवं मूलं बीजं येषां ते मूलबीजा उत्पलकन्दादयः, पर्व बीजं येषां ते पर्वबीजा इक्ष्वादयः, स्कन्धो बीजं येषां ते स्कन्धबीजाः शल्लक्यादयः, बीजाद्रोहन्तीति बीजरुहाः शाल्यादयः, संमूर्छन्तीति संमूर्छिमाः प्रसिद्धबीजाभावेऽपि पृथिवीवर्षादिसमुद्भवाः, ते तथाविधास्तृणादयः, न चैते न संभवन्ति दग्धभूमावपि सम्भवात् तथा तृणलता वनस्पतिकायिका इत्यत्र तृणलताग्रहणं स्वगतानेकभेदसन्दर्शनार्थं वनस्पतिकायिकग्रहणं सूक्ष्मबादरादिकानेकवनस्पति

--

त जहा -अग्गबीया मूलबीया पोरबीया खंधबीया बीयरुहा समुच्छिमा तणलया वणस्सइकाइया सबीया चित्तमंतमक्खाया अणेगजीवा पुढोसत्ता अन्नत्थ सत्थपरिणएणं

भेदसंग्रहार्थम्, एतेन पृथिव्यादीनामपि स्वगता भेदा सूचिताः कथमित्याह–पृथिव्याः शर्करादयः, आपोऽवश्यायमिहिकादयः, अग्नयोऽङ्गारज्वालादयः, वायवो झञ्झामण्डलिकादयः, एतेऽग्रबीजादयः सबीजाश्चित्तवन्त आख्याताः कथिता इति एतेन प्रकथिता विशेषाः सजीवाः स्वस्वनिबन्धनाश्चित्तवन्त आत्मवन्त आख्याताः कथिताः। एते चानेकजीवा इत्यादिकं पूर्ववद्गमनिका एवमेव इदानीं त्रसाधिकारमाह—

से इति–सेशब्दोऽथशब्दार्थः, अथ ये पुनरमी बालादीनामपि प्रसिद्धा अनेके द्वीन्द्रियादिभेदेन बहव एकैकस्यां जातौ त्रसाः प्राणिनः, त्रसन्तीति त्रसाः प्राणा उच्छ्वासादयो येषां ते प्राणिनः, ते के इत्याह–एष खलु षष्ठो जीवनिकायस्त्रसकाय इति प्रोच्यत इति योगः. तत्राण्डाज्जाता अण्डजाः पक्षिगृहकोकिलादयः, पोतादिवज्जायन्त इति पोतजास्ते च हस्तिवल्गुलीचर्मजलौकादयः, जरायुभिर्वेष्टिता जायन्त इति जरायुजा गोमहिष्यजाविकमनुष्यादयः, रसाज्जाता रसजा आरनालदधितेमनादिषु प्रायः कृम्यादयोऽतिसूक्ष्मा भवन्ति, संस्वेदाज्जाता इति संस्वेदजा मत्कुणयूकादयः, संमूर्छनाज्जाताः संमूर्छिमाः शलभपिपीलिकामक्षिका-

से जे पुण इमे अणेगे बहवे तसा पाणा. तं जहा--अंडया पोयया जराउया रसया संसेइमा समु-
च्छिमा उब्भिया उववाइया. जेसिं केसिंचि पाणाणं अभिक्कंतं पडिक्कंतं संकुचियं पसारियं रुयं
भंतं तसियं पलाइयं आगइगइविन्नाया, जे य कीडपयंगा. जा य कुंथुपिपीलिया, सव्वे बेइंदिया

शालूकादयः, उद्भेदाज्जन्म येषां ते उद्भेदजा[1] पतङ्गखञ्जरीटपारिप्लवादयः, उपपाताज्जाता उपपातजाः उपपाते वा भवा औपपातिका देवा नारकाश्च. एतेषामेव लक्षणमाह–येषां केषांचित्सामान्येनैव प्राणिनां जीवानामभिक्रान्तं भवतीति शेषः. अभिक्रमणमभिक्रान्तं प्रज्ञापकं प्रत्यभिमुखं क्रमणमित्यर्थः, एवं प्रतिक्रान्तं प्रज्ञापनात्प्रतीपं क्रमणमिति भावः. सङ्कुचनं सङ्कुचितं गात्रसंङ्कोचकरणं, प्रसारणं गात्रविततकरणं, रवणं, रुतं शब्दकरणं भ्रमणं भ्रान्तमितस्ततश्च गमनं, त्रसनं त्रस्तं दुःखोद्विजनं, पलायितं कुतश्चिन्नाशनं,

१—उद्भेदाज्जायन्त इति विग्रहः साधुः ।

तथा आगत कुतश्चित्क्वचिद्गतेश्च कुतश्चित्क्वचिद्व विज्ञाया इति विज्ञातार नन्वभिक्रान्तप्रतिक्रान्ताभ्यामागतिगत्योर्न कश्चिद्भेद तदा किमर्थं भेदनाभिधानमुच्यते ? विज्ञानविशेषज्ञापनार्थं किमुक्तं भवति ? य एव विजानन्ति यथा वयमभिक्रामाम प्रतिक्रामामो वा त एवात्र त्रसा न तु वृत्तेरप्यभिक्रमणवन्तोऽपि वल्ल्यादय इति नन्वेषामपि द्वीन्द्रियादीनां त्रसाणामसंज्ञिअभिक्रमणप्रतिक्रमणभावेऽप्येवंविधज्ञानस्याभावादेषमेतत् हेतुसंज्ञाऽवगतेर्बुद्धिपूर्वकमिव छायात उष्णमुष्णाच्च छायां प्रतिक्रमणादिभावात्, न चैवं वल्ल्यादीनामभिक्रमणेऽप्योघसंज्ञाया प्रवृत्ते अथाधिकारागतत्रसभेदानाह—ये च

सव्वे तेइंदिया सव्वे चउरिंदिया सव्वे पंचेंदिया सव्वे तिरिक्खजोणिया सव्वे नेरइया, सव्वे मणुआ सव्वे देवा सव्वे पाणा परमाहम्मिआ एसो खलु छट्ठो जीवनिकाओ तसकाउत्ति पवुच्चइ

कीटपतङ्गा इत्यत्र कीटा कृमय, एकग्रहणे तज्जातीयानामपि ग्रहणमिति द्वीन्द्रिया शङ्खादयोऽपि गृह्यन्ते पतङ्गा शलभा अत्रापि एवं चतुरिन्द्रिया भ्रमरादयोऽपि गृह्यन्ते तथा यच्च कुन्थुपिपीलिका इत्यनेन त्रीन्द्रिया सर्वेऽपि गृह्यन्ते अतएवाह सर्वे द्वीन्द्रिया कृम्यादय सर्वे त्रीन्द्रिया कुन्थ्वादय सर्वे चतुरिन्द्रिया पतङ्गादय अत्राह— ननु ये च कीटपतङ्गा इत्यादौ उद्देशव्यत्यय कथम् ? उच्यते—विचित्रत्वात्सूत्रगते, अतन्त्र सूत्रक्रम इति ज्ञापनार्थं सर्वे पञ्चेन्द्रिया सामान्यतो विशेषत, पुन सर्वे तिर्यग्योनयो गवादय, सर्वे नारका रत्नप्रभानारकादिभेदभिन्ना, सर्वे मनुजा

कर्मभूमिजादयः, सर्वे देवा भवनवास्यादयः, सर्वशब्दोऽत्रान्यसमस्तदेवभेदानां सत्त्वख्यापनार्थः. सर्व एवैते त्रसाः, न त्वेकेन्द्रिया इव त्रसाः स्थावराश्चेति. उक्तं च–'पृथिव्यम्बुवनस्पतयः स्थावराः, तेजोवायू द्वीन्द्रियादयश्च त्रसाः' इति. सर्वेऽपि प्राणिनः परमधर्माण इति सर्व एते प्राणिनो द्वीन्द्रियादयः पृथिव्यादयश्च परमधर्माणः परमं सुखं तद्धर्माणो दुःखद्वेषिणः सुखाभिलाषिण इत्यर्थः. यतः कारणादेवं ततो दुःखोदयादिपरिहारवाञ्छया एतेषां षण्णां जीवनिकायानां नैव स्वयं दण्डं

**एएसिं छण्हं जीवनिकायाणं नेव सयं दंडं समारंभिज्जा, नेवन्नेहिं दंडं समारंभाविज्जा. दंडं समारंभंतेवि अन्ने न समणुजाणिज्जा जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि, करंतंवि अन्ने न समणुजाणामि, तस्सभंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि.**

समारभ इति योगः. षष्ठं जीवनिकायं पूर्णं कर्तुमाह–'एसो खलु छठ्ठो जीवनिकाओ तसकाओत्ति उच्चइ इच्चेसिं छह्नं जीवनिकायाणं नेव सयं दंडं समारंभिज्जा' इत्यादि. एष खलु पूर्व यः कथितः षष्ठो जीवनिकायः, पृथिव्यादिपञ्चकापेक्षया षष्ठत्वमस्य, त्रसकाय इति प्रोच्यते तैः सर्वैरेव तीर्थकरगणधरैरिति. एएसिमिति–एतेषां षण्णां जीवनिकायानामिति, अत्र

१ इचेसि, इत्यपि पाठ. । २ समणुजाणामि, इति क्वचित्पाठः ।

सप्तम्यर्थे षष्ठी, तत एतेषु षट्सु जीवनिकायेषु पूर्वं कथितस्वरूपेषु नैव स्वयमात्मना दण्डं सङ्घट्टनपरितापनादिलक्षणं समारभेत प्रवर्तयेत् तथा नैवान्यैः प्रेष्यादिभिर्दण्डमुक्तरूपं समारम्भयेत् कारयेदित्यर्थः दण्डं समारभमाणानपि अन्यान् प्राणिनो न समनुजानीयात्, नानुमोदयेदिति विधायकं भगवद्वचनं यतश्चैवं ततो यावज्जीवमित्यादि यावज्जीवमिति यावज्जीवं यावत् प्राणधारणं तावदित्यर्थः किमित्याह—त्रिविधं त्रिविधेनेति तिस्रो विधाः कृतादिरूपा यस्येति त्रिविधो दण्ड इति गम्यते तं त्रिविधेन करणेन एतदेव दर्शयति—मनसा वाचा कायेनेतेषां स्वरूपमेवम्—अस्य च करणस्य कर्म उक्तलक्षणो दण्डः, तं च वस्तुतो निषेधरूपतया सूत्रेणैव दर्शयति—न करोमि स्वयं न कारयाम्यन्यैः, कुर्वन्तमप्यन्यं न समनुजानामीति तस्य हे भदन्त! प्रतिक्रमामीति तस्य इति अधिकृतो योऽसौ त्रैकालिकविषयो दण्डस्तस्य सम्बन्धेनातीतमवयवं प्रतिक्रमामि, न वर्तमानमनागतं वा अतीतस्यैव प्रतिक्रमणात् भदन्तेति गुरोरामन्त्रणम्, भदन्त भवान्त भयान्त इति साधारणी श्रुतिः, अनेनैतज्ज्ञापितं—व्रतप्रतिपत्तिर्गुरुसाक्षिक्येव, प्रतिक्रमामीति भूतदण्डादहं निवृत्त इत्युक्तं भवति, तस्माच्च निवृत्तिश्चानुमतेर्विरमणम् तथा निन्दामि गर्हामि, तत्र निन्दा आत्मसाक्षिकी, गर्हा परसाक्षिकी, जुगुप्सा च आत्मानमतीतदण्डकारिणमश्लाघ्यम् व्युत्सृजामीति विशेषेण भृशं च त्यजामि अथ चात्मप्रत्ययो दण्डः सामान्यविशेषभेदाद्द्विधा, तत्र सामान्येनैष कथितः, स एव विशेषेण महाव्रतरूपतया आह सूत्रक्रमेण—

पढम इति-प्रथमे, भदंत हे गुरो ! महाव्रते. महच्च तद् व्रतं च महाव्रतं महत्त्वं चाणुव्रतापेक्षया, तस्मिन् महाव्रते प्राणातिपाताद्विरमणे, प्राणा एकेन्द्रियास्तेषामतिपातः प्राणातिपातो जीवस्य महादुःखोत्पादनं, न तु जीवातिपात एव तस्माद्विरमणं नाम सम्यग्ज्ञानश्रद्धानपूर्वकं सर्वथा निवर्तनं भगवता कथितमिति शेषः यतश्चैवमत उपादेयमिति निश्चित्य सर्वं हे भदन्त !

पढमे भंते महव्वए पाणाइवायाओ वेरमणं. सव्वं भंते पाणाइवायं पच्चक्खामि. से सुहुमं वा बायरं वा तसं वा थावरं वा नेव सयं पाणे अइवाइज्जा, नेवन्नेहिं पाणे अइवायाविज्जा, पाणे अइवायंते वि अन्ने न समणुजाणामि, जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि, करंतं वि ( पि ) अन्ने न समणुजाणामि, तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि. पढमे भंते महव्वए उवट्ठिओमि सव्वाओ पाणाइवायाओ वेरमणं. १.

प्राणातिपातं प्रत्याख्यामीति. सर्वं समस्तं, न तु परिस्थूलमेव. हे भदन्त हे गुरो ! प्राणातिपातव्याख्यानं पूर्ववत् प्रत्याख्यामि निषेधयामि. अथ प्राणातिपातं प्रत्याख्यामीत्युक्तं तद्विशेषतो वक्तुमाह—से शब्दो मागधीभाषाप्रसिद्धोऽथशब्दार्थः. तद्यथा—सूक्ष्मं वा बादरं वा त्रसं वा स्थावरं वा. अत्र सूक्ष्मोऽल्पः परिगृह्यते, न तु सूक्ष्मनामकर्मोदयात्सूक्ष्मः, कथं ? तस्य कायेन

व्यापादनस्याभावात् बादरोऽपि स बैकको द्विधा, त्रस स्थावरश्च, तत्र त्रस सूक्ष्म कुन्थ्वादि, स्थावर सूक्ष्मो वनस्पत्यादि बादरस्त्रसो गवादि, बादर स्थावर पृथिव्यादि, एतान् 'नेव सयं पाणे अइवाइज्जाति' नैव स्वयं प्राणिनोऽतिपातयामि, नैव अन्यै प्राणिनोऽतिपातयामि, प्राणिनोऽतिपातयतोऽप्यन्यान् समनुजानामि, यावज्जीवमित्यादि पूर्ववत्, व्रतप्रतिपत्ति पूर्णा

अहावरे दुच्चे भंते महव्वए मुसावायाओ वेरमण सव्व भंते मुसावाय पच्चक्खामि, से कोहा वा लोहा वा भया वा हासा वा नेव सय मुस वइज्जा, नेवन्नेहिं मुस वायाविज्जा, मुस वयतेवि अन्ने न समणुजाणामि जावज्जीवाए तिविह तिविहेण मणेण वायाए काएण न करेमि न कारवेमि, करंत वि ( पि ) अन्ने न समणुजाणामि, तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाण वोसिरामि, दुच्चे भंते महव्वए उवट्ठिओमि सव्वाओ मुसावायाओ वेरमण २

कुर्वसाह—प्रथमे भदन्त ! महाव्रते उपस्थितोऽस्मि, उप सामीप्येन तस्य परिणामस्यापरया स्थित इत आरभ्य मम सर्वस्मात् प्राणातिपाताद्विरमणम् १ उक्तं प्रथमव्रत द्वितीये व्रतमाह—अहावरे इति—अथापरस्मिन् द्वितीये भदन्त ! महाव्रते मृषावादाद्विरमण सर्व हे भदन्त ! मृषावादं प्रत्याख्यामीति पूर्ववत्, तद्यथा—क्रोधाद्वैव मृषावादं वदामीत्युक्ति, एव

लोभाद्वा, " आद्यन्तयोर्ग्रहणे मध्यस्यापि ग्रहणम् " इति न्यायान्मानमाययोर्ग्रहणं, ततो मानाद्वा, मायाया वा, पुनर्भयाद्वा हासाद्वा, उपलक्षणत्वात्प्रेमतो वा द्वेषतो वा अभ्याख्यानादितो वा नैव मृषा स्वयं वदामि, नैव मृषान्यैर्वादयामि, नैव मृषा वदतोऽप्यन्यान् समनुजानामि यावज्जीवमित्यादि पूर्ववत्. २. उक्तं द्वितीयं व्रतमथ तृतीयं व्रतमाह—

अहावरे तच्चे भंते महव्वए अदिन्नादाणाओ वेरमणं. सव्वं भंते अदिन्नादाणं पच्चक्खामि, से गामे वा नगरे वा रणे वा अप्पं वा बहु वा अणु थूलं वा चित्तमंतं वा अचित्तमंतं वा नेव सयं अदिन्नं गिण्हिज्जा, नेवन्नेहिं अदिन्नं गिण्हाविज्जा, अदिन्नं गिण्हंतेवि अन्ने न समणुजाणामि, जावजीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतंवि ( पि ) अन्ने न समणुजाणामि, तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि, तच्चे भंते महव्वए उवट्ठिओमि सव्वाओ अदिन्नादाणाओ वेरमणं ३.

अहावरे इति—अथापरस्मिंस्तृतीये हे भदन्त ! महाव्रतेऽदत्तादानाद्विरमणं, सर्वं हे भदन्तादत्तादानं प्रत्याख्यामीत्यादि पूर्ववत्. तद्यथा—ग्रामे वा नगरे वाऽरण्ये वा, उपलक्षणत्वात् क्षेत्रे वा प्रसिद्धान्येतानि. तथाल्पं मूल्यत एरण्डकाष्ठादिद्रव्यं, बहु वा मूल्यतो

घष्मादिद्रव्यं, अणु वा प्रमाणतो वज्रादिद्रव्यं, स्थूल वा एरण्डकाष्ठादिद्रव्यम् एतच्च चित्तवद्वा सचेतनम्, अचित्तवद्वा अचेतनं, नैव स्वयमदत्तं गृह्णामि, नैवान्यैरदत्तं ग्राहयामि, नैवादत्तं गृह्णतोऽप्यन्यान् समनुजानामि यावज्जीवमित्यादिव्याख्यानं पूर्ववत् ३ उक्तं तृतीयं व्रतमधुना चतुर्थं व्रतमाह—अहावरे इति—अथापरस्मिन् चतुर्थे हे भदन्त ! महाव्रते मैथुनाद्विरमणं

अहावरे चउत्थे भंते महव्वए मेहुणाओ वेरमणं सव्वं भंते मेहुणं पच्चक्खामि, से दिव्वं वा माणुस्सं वा तिरिक्खजोणियं वा, नेव सयं मेहुणं सेविज्जा, नेवन्नेहिं मेहुणं सेवाविज्जा, मेहुणं सेवंते वि अन्ने न समणुजाणामि, जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं वि अन्ने न समणुजाणामि, तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि चउत्थे भंते महव्वए उवट्ठिओमि सव्वाओ मेहुणाओ वेरमणं ४

सर्वं हे भदन्त ! मैथुनं प्रत्याख्यामि, तद्यथा—मैथुनं त्रेधा—दैवं वा, मानुषं वा, तैर्यग्योनं वा, तत्र देवानामिदं दैवं देवदेवीसम्बन्धि, एवं मानुषं तैर्यग्योनिकं च ज्ञातव्यं, न स्वयं मैथुनं सेवे, न चान्यैर्मैथुनं सेवयामि, नैव मैथुनं सेवमानानन्यान् समनुजानामीति यावज्जीवमित्यादि व्याख्यानं पूर्ववत् ४ उक्तं चतुर्थं व्रतं, साम्प्रतं पञ्चमं महाव्रतं ( मुच्यते ) माह—

अहावरे इति—अथापरस्मिन् पञ्चमे हे भदन्त ! महाव्रते परिग्रहाद्विरमणं. सर्वं हे भदन्त ! परिग्रहं प्रत्याख्यामीति पूर्ववत्,

अहावरे पंचमे भंते महव्वए परिग्गहाओ वेरमणं. सव्वं भंते परिग्गहं पच्चक्खामि, से अप्पं वा बहुं वा अणुं वा थूलं वा चित्तमंतं वा अचित्तमंतं वा नेव सयं परिग्गहं परिगिण्हिज्जा, नेवन्नेहिं परिग्गहं परिगिण्हाविज्जा, परिग्गहं परिग्गिण्हंतेवि अन्ने न समणुजाणिज्जा, जावजीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि, करंतं वि अन्ने न समणुजाणामि, तस्स भंते पडिक्कमामि निंदामि गारिहामि अप्पाणं वोसिरामि, पंचमे भंते महव्वए उवट्ठिओमि सव्वाओ परिग्गहाओ वेरमणं. ५.

तद्यथा—नैव स्वयं परिग्रहं परिगृह्णामि, नैवान्यैः परिग्रहं परिग्राहयामि, परिग्रहं परिगृह्णतोऽप्यन्यान्न समनुजानामि. इत्येतद्यावज्जीवमित्यादि च व्याख्यानं च पूर्ववत्. ५. उक्तं च पञ्चमं महाव्रतमधुना षष्ठं व्रतमाह—

अहति—अथापरस्मिन् षष्ठे व्रते रात्रिभोजनाद्विरमणं सर्वं हे भदन्त ! रात्रिभोजनं प्रत्याख्यामि, तद्यथा—अश्यत इति अशनमोदनादि पीयते तत्पानं द्राक्षापानादि, खाद्यत इति खाद्यं जम्बूकादि, स्वाद्यं ताम्बूलादि, नैव स्वयं रात्रौ भुञ्जे,

अहावरे छट्ठे भंते वए राइभोयणाओ वेरमणं सव्वं भंते राइभोयणं पच्चक्खामि, से असणं वा पाणं वा खाइमं वा साइमं वा, नेव सयं राइं भुंजिज्जा, नेवन्नेहिं राइं भुंजाविज्जा, राइं भुंजंते वि अन्ने न समणुजाणिज्जा, जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं वि अन्नं न समणुजाणामि, तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि छट्ठे भंते वए उवट्ठिओमि सव्वाओ राइभोयणाओ वेरमणं ६

इच्चेयाइं पंचमहव्वयाइं राइभोयणवेरमणछट्ठाइं अत्तहियट्ठियाए उवसंपज्जित्ता णं विहरामि

नैवान्यैः रात्रौ भोजयामि, रात्रौ भुञ्जानानप्यन्यान्न समनुजानामि, इत्येतत्पावज्जीवमित्यादि पूर्ववत् ६ इच्चे इति—एतच्च रात्रिभोजनविरमणं प्रथमचरमतीर्थकरतीर्थयोः ऋजुजडवक्रजडपुरुषापेक्षया मूलगुणत्वख्यापनार्थं पञ्चमहाव्रतोपरि पठितं,

१ गर्भूपरवि द ।

मध्यमतीर्थकरतीर्थेषु पुनः ऋजुप्राज्ञपुरुषापेक्षयोत्तरगुण इति. समस्तव्रतानामङ्गीकारकरणकथनार्थमाह—इत्येतानि पूर्वं कथितानि पञ्च महाव्रतानि रात्रिभोजनविरमणषष्ठानि. किमित्याह—आत्महिताय. आत्महितो मोक्षस्तदर्थमुपसम्पद्य

से भिक्खू वा भिक्खुणी वा संजयाविरयपडिहयपच्चक्खायपावकम्मे दिआ वा राओ वा एगओ वा परिसागओ वा सुत्ते वा जागरमाणे वा. से पुढविं वा भित्तिं वा सिलं वा लेट्ठुं वा ससरक्खं वा कायं वा ससरक्खं वा वच्छं हत्थेण वा पाएण वा कट्ठेण वा किलिंचेण वा अंगुलियाए वा सिलागए वा सिलागहत्थेण वा न आलिहिज्जा, न विलिहिज्जा, न घट्टिज्जा, न भिंदिज्जा अन्नं न आलिहाविज्जा, न विलिहाविज्जा न घट्टाविज्जा, न भिंदाविज्जा, अन्नं आलिहंतं वा विलिहंतं वा घट्टंतं वा भिंदंतं वा न समणुजाणाविज्जा[1], जावजीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं वि अन्नं न समणुजाणामि, तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि. १.

सामीप्येनाङ्गीकृत्य व्रतानि विहरामि सुसाधुविहारेण. उक्तश्चारित्रधर्मः स च यतनया स्यात्. अतो यतनार्थमाह—स इति—से इति निर्देशे, स योऽसौ महाव्रतयुक्तो भिक्षुर्वा भिक्षुकी वा आरम्भत्यागात्, धर्मकायपालनाय भिक्षणशीलो

१ जाणामि, इति क्वचित्पाठस्तु च प्रकरणप्रतिकूलः ।

भिक्षुरेव भिक्षुण्यपि पुरुषोत्तमो धर्म इति भिक्षुर्विशेष्यते, तद्विशेषणानि भिक्षुण्या अपि ज्ञेयानि भिक्षुविशेषणान्याह–संयतविरतप्रतिहतप्रत्याख्यातपापकर्मा, तत्र सामस्त्येन यत: संयत: सप्तदशप्रकारसंयमसहित: पुनर्विविधमनेकप्रकारतया द्वादशविधे तपसि रतो विरत: पुन: प्रतिहतप्रत्याख्यातपापकर्मा प्रतिहतं स्थितेर्ह्रासात् ग्रन्थिभेदेन प्रत्याख्यात हेत्वभावत; पुन: शब्दरमायन पाप पापकर्म ज्ञानावरणीयादि येन स: तत: कर्मधारय: स तथाविधो दिवा वा, रात्रौ वा, एकको वा परिषद्गतो वा, सुप्तो वा, जाग्रद्वा, रात्रौ सुप्तो दिवा जाग्रत्, कारणिक एक: शेषकाले परिषद्गत इदं वक्ष्यमाणं न कुर्यात् किं तदित्याह–पृथिवी लोष्टादिरहिता भित्तिर्नदी तटी, शिला विशाल: पाषाण: लेष्टु: प्रसिद्ध: सह रजसारण्यपांशुलक्षणेन वर्तते य: स सरजस्क: क: ? कायो देहस्तं सरजस्कं वा वस्त्रं चोलपट्टकादि एकग्रहणेन तज्जातीयग्रहणमिति न्यायात्पात्रादिपरिग्रह:, एतानि किमित्याह–हस्तेन वा पादेन वा काष्ठेन वा किलिञ्चेन वा क्षुद्ररूपेण वा अङ्गुल्या वा शलाकया वा लोहशलाकारूपया शलाकाहस्तेन शलाकासमूहरूपेण वा, किं न कुर्यादित्याह–न आलिखेत्, आ ईषत्सकृद्वा लेखनं न स्वयं कुर्यात्, न विलिखेत्, नापि स्वयं नितरामनेकशो वा लेखनं कुर्यात्, न घट्टयेत्, न स्वयं घट्टनं चालनं कुर्यात्, न भिन्द्यात्, न स्वयं भेदं विदारणं कुर्यात् तथान्यमन्येन, वा नालेखयेत्, न विलेखयेत्, न घट्टयेत्, न भेदयेत् तथान्यं स्वत एवालिखन्तं वा विलिखन्तं वा घट्टयन्तं वा भिन्दन्तं वा न समनुजानीयादित्यादि पूर्ववत् १ तथा पुन: पूर्ववत् स किं न कुर्यादित्याह–

स इति—स भिक्षुरुदकं वा शिरापानीयम्, अवश्यायं वा स्नेहं, हिमं वा स्त्यानोदकं, मिहिकां वा धूमरिकां, करकां वा कठिनोदकरूपां, हरतनुकं वा भुवमुद्भिद्य तृणाग्रादिस्थितं. शुद्धोदकमाकाशोदकं, उदकार्द्रं वा कायमुदकार्द्रं वा वस्त्रं, उदकार्द्रता च गलद्बिन्दुरूपा ग्राह्या. सस्निग्धं वा कायं सह स्निग्धेन स्नेहन वर्तते यः स सस्निग्धः, स चासौ कायश्च तमेवं-

से भिक्खू वा भिक्खुणी वा संजयविरयपडिहयपच्चक्खायपावकम्मे दिआ वा राओ वा एगओ वा परिसागओ वा सुत्ते वा जागरमाणे वा से उदगं वा ओसं वा हिमं वा महियं वा करगं वा हरतणुगं वा सुद्धोदगं वा उदउल्लं वा कायं वा उदउल्लं वा वत्थं ससिणिद्धं वा कायं ससिणिद्धं वा वत्थं न आमुसिज्जा, न संफुसिज्जा, न आविलिज्जा न पविलिज्जा, न अक्खोडिज्जा, न पक्खोडिज्जा, न आयाविज्जा, न पयाविज्जा, अन्नं न आमुसाविज्जा, न संफुसाविज्जा, न आवीलाविज्जा, न पवीला-

विधं कायं, एवं सस्निग्धं वा वस्त्रं, सस्निग्धता चेह बिन्दुरहिता ज्ञेया एतत्किमित्याह–नामुसिज्जा सकृदीषद्वा स्पर्शनमामर्षणं न स्वयं कुर्यात्, न संफुसिज्जा ततोऽन्यत्संस्पर्शनं न कुर्यात्. एवं नावीलिज्जा सकृदीषद्वा पीडनं, न पवालिज्जा ततोऽन्यत्प्रपीडनं, न अक्खोडिज्जा सकृदीषद्वास्फोटनं, न पक्खोडिज्जा ततोऽन्य प्रस्फोटनं, नायाविज्जा एवं नावेलिज्जा सकृदीषद्वातापनं,

न पर्याविज्ञा प्रकपण तापनं प्रतापनम्, एतानि सर्वाणि स्वयं न कुर्यात् तथान्यमन्येन वा नामर्षयेत् न संस्पर्शयेत् नापीडयेत् न प्रपीडयेत् नास्फोटयेत् न प्रस्फोटयेत् नातापयेत् न प्रतापयेत् तथान्यं स्वत एवामृषन्तं वा संस्पृशन्तं वा आपीडयन्तं वा प्रपीडयन्तं वा आस्फोटयन्तं वा प्रस्फोटयन्तं वा आतापयन्तं वा प्रतापयन्तं वा न समनुजानीयादित्यादि पूर्ववत् २

विज्जा, न अक्खोडाविज्जा, न पक्खोडाविज्जा, न आयाविज्जा न पयाविज्जा, अन्नं आमुसंतं वा संफुसंतं वा आवीलंतं वा पवीलंतं वा अक्खोडतं वा पक्खोडतं वा आयावतं वा पयावतं वा न समणुजाणाविज्जा जावजीवाए तिविहं तिविहेणं मणेणं वायाए कायेणं न करेमि, न कारवेमि करतंपि अन्नं न समणुजाणामि, तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि २

से भिक्खू वा भिक्खुणी वा संजयविरयपडिहयपच्चक्खायपावकम्मे दिआ वा राओ वा एगओ वा परिसागओ वा सुत्ते वा जागरमाणे वा, से अगणिं वा इंगालं वा मुम्मुरं वा अच्चिं वा जालं वा

स इति-इहाग्निं लोहपिण्डानुगतं वा ज्वालारहितमङ्गारं विरलाग्निकणरूपं, मुर्मुरं मूलाग्निविच्छिन्ना ज्वाला, अग्निर्मूलामिमतिबद्धा ज्वालामलातमुल्मुकमिन्धेन रहितं शुद्धाग्निं गगनाग्निरूपामुल्कां, एतत्किमित्याह-भिक्षुरेतन्न कुर्यात्, किं तदाह-

१ प्रकार आमार्मीविराठ पूर्ववत् । एवं सर्वत्र ।

नो उञ्जेज्जा नो उत्सिञ्चेत्, उञ्जनमुत्सेचनं नो कुर्यात्, नो घट्टिज्जा. घट्टनं सजातीयादिना चालनं, न उज्जालिज्जा उज्ज्वालनं व्यजनादिभिर्वृद्ध्यापादनं, न निव्वाविज्जा निर्वापणं विध्यापनं. एतानि न स्वयं भिक्षुः कुर्यात्, तथान्यमन्येन वा नोत्सेचयेत्. न घट्टयेत् नोज्ज्वालयेत् न निर्वापयेत्. तथान्यं स्वत एव उत्सिञ्चन्तं वा घट्टयन्तं वा उज्ज्वालयन्तं वा निर्वापयन्तं वा

अलायं वा सुद्धागणिं वा उक्कं वा न उंजेज्जा, न घट्टेज्जा, न भिंदेज्जा, न उज्जालेज्जा, न पज्जालेज्जा, न निव्वावेज्जा, अन्नं न उंजावेज्जा, न घट्टावेज्जा, न भिंदावेज्जा, न उज्जालावेज्जा, न पज्जालावेज्जा, न निव्वावेज्जा, अन्नं उंजंतं वा घट्टंतं वा भिंदंतं वा उज्जालंतं वा पज्जालंतं वा निव्वावंतं वा न समणुजाणाविज्जा, जावजीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं वि अन्नं न समणुजाणामि, तस्स भंते पडिक्कमामि निंदामि गारिहामि अप्पाणं वोसिरामि. ३.

से भिक्खू वा भिक्खुणी वा संजयविरयपडिहयपच्चक्खायपावकम्मे दिआ वा राओ वा एगओ वा

न समनुजानीयादित्यादि पूर्ववत्. ३. से इति–से भिक्खु० इत्यादिव्याख्या पूर्ववत्. पुनः सितेन वा चामरेण, विधुवनेन वा व्यजनेन, तालवृन्तेन वा तेनैव मध्यग्रहणच्छिद्रेण द्विपुटेन, पत्रेण वा पद्मिनीपत्रादिना, पत्रभङ्गेन तस्यैकदेशेन, शाखया वा

पुस्तडाल्या, शाखाभङ्गेन वा शाखादेशेन, पिहुणेन वा मयूरादिपिच्छेन, पिहुणहस्तेन वा मयूरादिपिच्छसमूहेन, चैलेन वा वस्त्रेण, चेलकर्णेन वा वस्त्रैकदेशेन, हस्तेन वा करेण, मुखेन वा वदनेन, एभिः कृत्वा किमित्याह—आत्मनो वा कायं स्वदेहं

परिसागओ वा सुत्ते वा जागरमाणे वा, से सिएण वा विहुणेण वा तालिअटेण वा पत्तेण वा पत्तभंगेण वा साहाए वा साहाभंगेण वा पिहुणेण वा पिहुणहत्थेण वा चेलेण वा चेलकन्नेण वा हत्थेण वा मुहेण वा अप्पणो वा कायं बाहिरं वावि पुग्गलं न फुमेज्जा न वीएज्जा, अन्नं न फुमावेज्जा, न वीआवेज्जा, अन्नं फुमंतं वा वीअंतं वा न समणुजाणिज्जा, जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अन्नं न समणुजाणामि, तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ४

मित्यर्थः, बाह्यं वा पुद्गलमुष्णोदकादि, एतत्किमित्याह—न फूमिज्जा न स्वयं फूत्कुर्यात्, मुखेन धमनं न कुर्यात्, न वीइज्जा न वीजयेद्वाचामरादिना तथान्यमन्येन वा न फूत्कारयेत्, न वीजयेत् तथान्यं स्वत एव फूत्कुर्वन्तं वा व्यजन्तं वा न समनुजानीयादित्यादि पूर्ववत्. ४

से इति–तथा पूर्ववद्वीजेषु वा शाल्यादिषु बीजप्रतिष्ठितेषु वा आसनशयनादिषु रूढेषु स्फुटितबीजेष्वङ्कुरितेषु, रूढप्रतिष्ठितेष्वासनशयनादिषु. जातेषु वा स्तम्बीभूतेषु. जातप्रतिष्ठितेषु वा आसनशयनादिषु, हरितेषु वा दूर्वादिषु. हरितप्रतिष्ठितेषु

से भिक्खू वा भिक्खुणी वा संजयविरयपडिहयपच्चक्खायपावकम्मे दिआ वा राओ वा एगओ वा परिसागओ वा सुत्ते वा जागरमाणे वा, से बीएसु वा बीयपइट्ठेसु वा रूढेसु वा रूढपइट्ठेसु वा जाएसु वा जायपइट्ठेसु वा हरिएसु वा हरियपइट्ठेसु वा छिन्नेसु वा छिन्नपइट्ठेसु वा सच्चित्तेसु वा सच्चित्तकोलपडिनिस्सिएसु वा न गच्छेज्जा न चिट्ठेज्जा न निसीइज्जा न तुअट्टेज्जा, अन्नं न गच्छावेज्जा न चिट्ठावेज्जा न निसीयावेज्जा न तुअट्टाविज्जा, अन्नं गच्छंतं वा चिट्ठंतं वा निसीयंतं वा तुअट्टंतं वा न समणुजाणाविज्जा जावजीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं वि अन्नं न समणुजाणामि, तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ५.

वा आसनशयनादिषु, छिन्नेषु वा परशुप्रमुखप्रहरणछिन्नवृक्षात्पृथक्स्थापितेषु, आर्द्रेष्वपरिणतेषु. छिन्नप्रतिष्ठितेषु वा छिन्नप्रतिष्ठितासनशयनेषु, सचित्तेषु वा अण्डकादिषु. सच्चित्तकोलप्रतिनिश्रितेषु. सच्चित्तकोलो घुणस्तत्प्रतिनिश्रितेषु तदुपरिवर्तिषु दार्वा–

दिषु, तेषु किमित्याह—न गच्छेत् न तिष्ठेत् न निषीदेत् न त्वग्वर्तयेत् एतत्सर्वं न स्वयं कुर्यात् तथान्यमेतेषु न गमयेत् न स्थापयेत् न निषीदयेत् न स्वापयेत् तथान्यं स्वत एव गच्छन्तं वा निषीदन्तं वा स्वपन्तं वा न समनुजानीयादित्यादि पूर्ववत्५

स इति—कीटं वा द्वीन्द्रियं पतङ्गं वा कुन्थुं वा त्रीन्द्रियं पिपीलिकां वा, किमित्याह—हस्ते वा पादे वा बाहौ वा ऊरुणि

से भिक्खू वा भिक्खुणी वा संजयविरयपडिहयपच्चक्खायपावकम्मे दिआ वा राओ वा एगओ वा परिसागओ वा सुत्ते वा जागरमाणे वा, से कीडं वा पयंगं वा कुंथुं वा पिपीलियं वा हत्थंसि वा पायंसि वा बाहुंसि वा ऊरुंसि वा उदरंसि वा सीसंसि वा वत्थंसि वा पडिग्गहंसि वा कंबलंसि वा पायपुंछणंसि वा रयहरणंसि वा गोच्छगंसि वा उंडगंसि वा दंडगंसि वा पीढगंसि वा फलगंसि वा सेज्जंसि वा संथारगंसि वा अन्नयरंसि वा तहप्पगारे उवगरणजाए तओ संजयामेव पडिलेहिअ पडिलेहिअ पमज्जिअ पमज्जिअ एगंतमवणेज्जा नो णं संघायमावज्जेज्जा ६

वा उदरे वा शिरसि वा वस्त्रे वा पात्रे वा कम्बलके वा पादप्रोञ्छनके वा रजोहरणे वा गोच्छे वा उंदके मात्रके स्थण्डिले वा दण्डके वा पीठके वा फलके वा शय्यायां वा संस्तारके वा अन्यतरस्मिन् वा तथाप्रकारे साधुक्रियाया उपयोगिनि उपकरण

जाते तेषु स्थानेषु कीटादिरूपं त्रसं कथञ्चिदापतितं सन्तं संयत एव सत्प्रयत्नेन वा प्रत्युपेक्ष्य प्रत्युपेक्ष्य पौनःपुन्येन, सम्यक्प्रमृज्य प्रमृज्य पौनःपुन्येन. सम्यक्किमित्याह—एकान्ते यत्र स्थाने तस्य कीटादेरुपघातो न भवति तत्रापनयेत् परित्यजेत्, परं नैनं सङ्घातमापादयेत्. नैनं त्रसं सङ्घातं परस्परगात्रसंस्पर्शपीडारूपमापादयेत् प्रापयेत्. अनेन कथनेन परितापनादिप्रतिषेध उक्तो ज्ञातव्यः. एकस्य करणस्य ग्रहणेनान्यकारणानुमत्योरपि प्रतिषेधः ६. साम्प्रतमुपदेशमाह—अजयमिति—अयतं चरन् यत्नं विना गच्छन्निर्यासमितिमुल्लङ्घ्य, किमित्याह—प्राणिभूतानि हिनस्ति, प्राणिनो द्वीन्द्रिया-

अजयं चरमाणो अ पाणभूयाइं हिंसइ । वंधई पावयं कम्मं तं से होइ कडुअं फलं १.

अजयं चिट्ठमाणो अ पाणभूयाइं हिंसइ । वंधई पावयं कम्मं तं से होइ कडुअं फलं २.

अजयं आसमाणो अ पाणभूयाइं हिंसइ । वंधई पावयं कम्मं तं से होइ कडुअं फलं ३.

दयः, भूतानि एकेन्द्रियास्तानि हिनस्ति, प्रमादेनानाभोगेन च व्यापादयति, तानि हिंसन् बध्नाति पापकं कर्म, अकुशलपरिणामादादत्ते क्लिष्टं ज्ञानावरणीयादि. तत्पापकर्म से तस्यायत्नचारिणो भवति कटुकफलमशुभफलं भवति. मोहादिहेतुत्वेन विपाकदारुणमित्यर्थः १. अजयमिति—एवमयतं तिष्ठन्नूर्ध्वस्थानेनासमंजसं हस्तपादादिकं विक्षिपन्, शेषं पूर्ववत्. २. अजयमिति—एवमयतमासीनो निषण्णतया अनुपयुक्तः सन्नाकुञ्चनादिभावेन, शेषं पूर्ववत्. ३,

एवमयतं स्वपन्नसमाहितो दिवसे प्रकामशय्यादिना, शेषं पूर्ववत् ४—एवमयतं भुञ्जानो निष्प्रयोजन प्रणीत पाकभुगादिभक्षितादिना, शेषं पूर्ववत ५. भजयमिति—एवमयतं भाषमाणो गृहस्थभाषया निष्ठुरमन्तरभाषा दिना शेषं पूर्ववत् ६ अथ शिष्य आह—कहमिति—यद्येवं पापकर्मबन्धस्ततः कथं चरेदित्याह—कथं केन प्रकारेण चरेत्

अजय सयमाणो अ पाणभूयाइ हिंसइ । बधई पावय कम्म त से होइ कडुअ फलं ४

अजय भुजमाणो अ पाणभूयाइ हिंसइ । बधई पावय कम्मं तं से होइ कडुअं फल ५

अजय भासमाणो अ पाणभूयाइ हिंसइ । बधई पावय कम्म त से होइ कडुअ फल ६.

कह चरे कह चिट्ठे कहमासे कह सए । कह भुजतो भासतो पाव कम्म न बधइ ७

जय चरे जय चिट्ठे जयमासे जय सए । जय भुजतो भासतो पाव कम्म न बधइ ८

कथं तिष्ठेत् कथमासीत कथं स्वपेत्, कथं भुञ्जानोऽन्नं कथं भाषमाणः पापकर्म न बध्नाति ? ७ अत्राचार्य उत्तरमाह—जयमिति—यतं चरेत् सूत्रस्योपदेशेन ईर्यासमितियोदिसमित्व सन्, यतं तिष्ठेत्समाहितः सन् हस्तपादादीनां विक्षेपण

विना, यतमासीत उपयुक्तः सन्नाकुञ्चनादेरकरणेन, यतं स्वपेत् समाधिमान् सन् रात्रौ प्रकामशय्यादिपरिहारेण, यतं भुञ्जानोऽप्रणीतं सिंहभक्षितादिना, एवं यतं भाषमाणः साधुभाषया तदपि मृदु कालप्राप्तं च, एवं कुर्वन् साधुः पापं कर्म क्लिष्टमकुशलानुबन्धि ज्ञानावरणीयादि न बध्नाति, कथम् ? आश्रवरोधनात् साध्वाचारतत्परत्वाच्च. ८. सव्वेति–किञ्चैवंविधस्य साधोः पापं कर्म न बध्यते. तस्य साधोः पापकर्मबन्धो न भवतीत्यर्थः, किंभूतस्य साधोः ? सर्वभूतेष्वात्मभूतो य आत्मवत्सर्वभूतानि पश्यति तस्य, किंकुर्वतः साधोः ? सम्यग्वीतरागकथितेन विधिना भूतानि पृथिव्या-

सव्वभूयप्पभूअस्स सम्मं भूयाइ पासओ । पिहिआसवस्स दंतस्स पावं कम्मं न बंधइ ९.

पढमं नाणं तओ दया एवं चिट्ठइ सव्वसंजए । अन्नाणी किं काही किंवा नाही छेअपावगं १०.

दीनि पश्यतः, पुनः किंभूतस्य साधोः ? पिहितो निरुद्धः स्थगित आश्रवः प्राणातिपातादिरूपो येन स तस्य, पुनः किंभूतस्य साधोः ? दान्तस्य दमितेन्द्रियनोइन्द्रियव्यापारस्य, एवं सति किं भवति ? सर्वभूतदयावतः पापकर्मबन्धो न भवति. ९. शिष्यः प्राह–पढममिति–इत्यनेन किमागतं ? सर्वप्रकारेण दयायामेव यतितव्यं. किं प्रयोजनं ज्ञानाभ्यासेन ? गुरुराह–मा एवं भ्रमं कुरु ? यतः प्रथममादौ ज्ञानं जीवस्वरूपरक्षणस्योपायफलविषयं, ततस्तथाविधज्ञानात्पश्चाद्दया संयमः, एवमनेन प्रकारेण ज्ञानपूर्वकदयाप्रतिपत्तिरूपेण तिष्ठत्यास्ते सर्वसंयतः सर्वोऽपि साधुवर्गः परं यः पुनरज्ञानी ज्ञानरहितः स किं करिष्यति ?

१. स्वप्यादिति-साधीयान् ।

सवत्रा धतुत्पत्वास्मवृत्तिनिमित्तस्याभावात्, किं वा कुयन् ज्ञास्यति छेकं निपुणं हितं काळस्योचित पापकं वा छेकाद्विपरीतं, तस्करणं भावतोऽकरणमेव समस्तनिमित्तानामभावादन्धमदीप्तपलायनघुणाक्षरवत् अत एवान्यत्राप्युक्त—"गीअच्छो अविहारो बीओ गीअच्छमीसिओ भणिओ। इत्तो तइअविहारो नाणुन्नाओ जिणवरेहिं॥" अतो ज्ञानाभ्यास' कार्य एष १० यत आह—सोच्चेति—श्रुत्वा जानाति कल्याणं वयास्यं संयमस्वरूपं श्रुत्वा च जानाति पापकं हिंसाख्यमसंयमस्वरूपम्, उभयमपि

सोच्चा जाणइ कल्लाण सोच्चा जाणइ पावग। उभयपि जाणए सोच्चा ज सेय त समायरे ११

जो जीवे वि न याणेइ अजीवे वि न याणइ। जीवाजीवे अयाणतो कह सो नाहीइ सयम १२

जो जीवे वि वियाणेइ अजीवे वि वियाणइ। जीवाजीवे वियाणतो सो हु नाहीइ सयम १३

संयमासंयमस्वरूपं श्रावकोपयोगि भावकयोग्य जानाति श्रुत्वा नाश्रुत्वा, यतश्चैवमत इत्थं विज्ञाय यच्छेकं तत् समाचरेत्तत्कुर्यादित्यर्थ' ११ उक्तमेव स्पष्टीकुर्वन्नाह—जो इति—यो जीवानपि पृथिवीकायादीन जानाति, अजीवानपि संयमस्योपघातिनो मणिस्वर्णादीन जानाति, एवं जीवाजीवानजानन् कथमसौ ज्ञास्यति संयमं तत्सम्बन्धिज्ञानस्याभावात् १२ जो इति—ततश्च यो जीवानपि विजानाति, अजीवानपि विजानाति, जीवाजीवान् विजानन् स एव ज्ञास्यति संयममिति। उपदेशाधिकार' समाप्त' १२ सांप्रतं धर्मस्य फलमाह—

जयेति–' जया इत्यादि ' यदा यस्मिन् काले जीवानजीवान् द्वावप्येतौ विजानाति, अनेन प्रकारेण जानाति, तदा तस्मिन् काले गतिं नरकगत्यादिरूपां बहुविधामनेकप्रकारां सर्वजीवानां जानाति, यथावस्थितजीवाजीवादिपरिज्ञानं विना गतिपरिज्ञानस्याभावात्. १४. अथ उत्तरोत्तरफलवृद्धिमाह—जयेति–यदा गतिं बहुविधां र जीवानां जानाति तदा पुण्यं च पापं च बहुविधगतिनिबन्धनं तथा बन्धं जीवकर्मयोगदुःखलक्षणं. मोक्षं च जीवकर्मवियोगसुखलक्षणं जानाति. १५.

जया जीवमजीवे अ दो वि एए वियाणइ । तया गइं बहुविहं सव्वजीवाण जाणइ १४.

जया गइं बहुविहं सव्वजीवाण जाणइ । तया पुन्नं च पावं च बंधं मुक्खं च जाणइ १५.

जया पुन्नं च पावं च बंधं मुक्खं च जाणइ । तया निव्विंदए भोए जे दिव्वे जे अ माणुसे १६.

जया निव्विंदए भोगे जे दिव्वे जे अ माणुसे । तया चयइ संजोगं सब्भिंतरबाहिरं १७.

जयेति–यदा पुण्यं च पापं च बन्धं च मोक्षं च जानाति, तदा निर्विन्ते मोहाभावात्सम्यग्विचारयत्यसारदुःखरूपतया, कान् ? भोगान् शब्दादीन् यान् दिव्यान् यान् मानुषान्, तेभ्यो व्यतिरिक्ताः शेषाः परमार्थतो भोगा एव न भवन्ति. १६ जयेति–यदा निर्विन्ते भोगान् दिव्यान् मानुषान्, तदा त्यजति संयोगं सम्बन्धं साभ्यन्तरबाह्यं, क्रोधादिरूपमाभ्यन्तरं स्वर्णादिरूपं बाह्यं सम्बन्धमित्यर्थः. १७.

जयति–यदा त्यजति सपार्ग साभ्यन्तर चार्थं तत्र मुण्डो भूत्वा द्रव्यतो भावतश्च प्रव्रजति प्रकर्षेण व्रजति मोक्षमनगार द्रव्यता भावतश्चाविद्यमानागारमित्यर्थः १८ जयेति–यदा मुण्डो भूत्वा प्रव्रजत्यनगार तदोत्कृष्ट सवरधर्म मथमाणा-तिपातादिनिवृत्तिरूप चारित्रधर्म स्पृशत्यनुत्तर सम्यगासेवत इत्यर्थः १९ जयेति–यदा सवरमुत्कृष्ट धर्म स्पृशत्यनुत्तर,

जया चयइ सजोग सपुब्भितरबाहिर । तया मुडे भवित्ता ण पव्वइए अणगारिअ १८

जया मुडे भवित्ता ण पव्वइए अणगारिअ । तया सवरमुक्किट्ठ धम्म फासे अणुत्तर १९

जया सवरमुक्किट्ठ धम्म फासे अणुत्तर । तया धुणइ कम्मरय अबोहिकलुसकड २०

जया धुणइ कम्मरय अबोहिकलुसकड । तया सव्वत्तग नाण दसण चाभिगच्छइ २१

जया सव्वत्तग नाण दसण चाभिगच्छइ । तया लोगमलोग च जिणो जाणइ केवली २२

तदा धुनाति, धातूनामनेकार्थत्वात्पातयति, किं ? कर्मरज कर्मैवात्मरंजनाद्रज इव कर्मरज, किंभूत कर्मरज, अबोधिकलुषकृतमबोधिरूपेण मिथ्यादृष्टिना उपात्तमित्यर्थः २० जयेति–यदा धुनाति कर्मरजोऽबोधिकलुषकृत, तदा सर्वत्रग ज्ञानमशेषज्ञेयविषयमशेष दर्शन चाभिगच्छति, आवरणस्याभावादाधिक्येन प्राप्नोति २१ जयेति–यदा सर्वत्रग ज्ञान दर्शन

चाधिगच्छति, तदा लोकं चतुर्दशरज्जुरूपमलोकं चानन्तं जिनो जानाति केवली. २२. जयेति–यदा लोकमलोकं च जिनो जानाति केवली, तदा उचितसमयेन योगान् निरुद्ध्य मनोयोगादीन् शैलेशी प्रतिपद्यते भवोपग्राहिकर्मांशक्षयार्थम्. २३. जयेति–यदा योगान्निरुद्ध्य शैलेशीं प्रतिपद्यते, तदा कर्म क्षपयित्वा सिद्धिं लोकान्तक्षेत्ररूपां गच्छति, किंभूतः ? नीरजाः

जया लोगमलोगं च जिणो जाणइ केवली । तया जोगे निरुंभित्ता सेलेसिं पडिवज्जइ २३.
जया जोगे निरुंभित्ता सेलेसिं पडिवज्जइ । तया कम्मं खवित्ता णं सिद्धिं गच्छइ नीरओ २४.
जया कम्मं खवित्ता णं सिद्धिं गच्छइ नीरओ । तया लोगमत्थयत्थो सिद्धो हवइ सासओ २५.
सुहसायगस्स समणस्स सायाउलगस्स निगामसाइस्स । उच्छोलणापहोअस्स दुलहा सुगइ तारिसगस्स २६.

कर्मरजोमुक्तः. २४. जयेति–यदा कर्म क्षपयित्वा सिद्धिं गच्छति नीरजाः, तदा लोकमस्तकस्थस्त्रैलोक्यस्योपरिवर्ती सिद्धो भवति शाश्वतः, कर्मबीजाभावे न पुनरुत्पद्यते. २५. उक्तो धर्मफलनामा षष्ठोऽधिकारः, अथ धर्मफलस्य दुर्लभत्वमाह– सुहेति–सुखास्वादकस्य प्राप्तेषु शब्दरसादिभोगेषु सुखोपभोगकर्तुः. एवंविधस्य श्रमणस्य द्रव्यतः प्रव्रजितस्य, पुनः किंभू-

तस्य श्रमणस्य ? शाताकुलस्य भाविसुखार्थं व्याक्षिप्तचित्तस्य, पुनः किंभूतस्य श्रमणस्य ? निकामशायिनः, निकाममत्यर्थं सूत्रार्थवेलामतिक्रम्य शयानस्य, पुनः किम्भूतस्य श्रमणस्य ? उत्सोलनया उदकस्यायतनया प्रकर्षेण धावति पादादिशुद्धिं करोति यः स तथा तस्य, किं स्यादित्याह–सुलभा सुप्रापा सुगतिः सिद्धिः, तादृशस्य भगवत आज्ञालोपकारिण २६
अथ धर्मफलस्य सुलभतामाह—तवोगुणेति–तादृशस्य भगवत आज्ञाकारिणः सुगतिः सिद्धिः सुलभा सुप्रापा भवति, किंविधस्य तादृशस्य ? तपोगुणप्रधानस्य पश्चाद्भावितपोगुणवतः, पुनः किंभूतस्य तादृशस्य ? ऋजुमतेर्मोक्षमार्गप्रवृत्तबुद्धेः,

तवोगुणपहाणस्स उज्जुमइ खंतिसंजमरयस्स। परीसहे जिणतस्स सुलहा सुगइ तारिसगस्स २७

पच्छावि ते पयाया खिप्पं गच्छंत्यमरभवणाइं। जेसिं पिओ तवो स–जमो अ खंती अ बंभचेरं च २८

पुनः किंभूतस्य ? क्षान्तिसंयमरतस्य क्षान्तिप्रधानस्य संयमस्य सेविन इत्यर्थः, पुनः किंभूतस्य ? परीषहान् क्षुत्पिपासादीन् जयतः पराभवतः २७ महार्थां षड्जीवनिकायिका इति विधिना उपसंहारमाह–पच्छेति–पश्चादपि वृद्धावस्थायामपि ते प्रयाताः प्रकर्षेण याता अविराधितसंयमा अपि सन्मार्गं प्रपन्ना द्रुतं गच्छन्त्यमरभवनानि देवविमानानि, ते के इत्याह–येषां प्रिय तपः संयमः क्षान्तिः ब्रह्मचर्यं च २८

१—अत्र विराधितसंयमा अपि" इति पाठः सापीयानिति भाति इति टिप्पणं चिन्त्यं संयमकालस्याल्पतया पूर्वानां तत्परिपाकाभावेन ध्रियमाणतया तावपि स्वर्गप्राप्तौ तथाविधस्यापि तस्य समर्थमिति पूर्वैरपि पश्चात् संयमविराधना न कार्येति सूत्रतात्पर्यात् ।

इति पूर्वप्रकारेणैतां षड्जीवनिकायिकामधिकृताध्ययनप्रतिपादितार्थरूपां न विराधयेदिति योगः, क इत्याह–सम्यग्दृष्टिर्जीवः सूत्रश्रद्धावान्. किंभूतः ? सदा यतः सर्वकालं यतनापरः, किमित्याह–दुर्लभं लब्ध्वा श्रामण्यं साधुत्वं षड्जीवनिकायसंरक्षणैकरूपं कर्मणा मनोवाक्कायक्रियया प्रमादेन न विराधयेत्. अप्रमत्तस्य तु यद्यपि कथञ्चिद् द्रव्यविराधना स्यात्तथा-

इच्चेअं छज्जीवणिअं सम्मद्दिट्ठी सया जए । दुल्लहं लहित्तु सामन्नं कम्मुणा न विराहिज्जासि त्ति बेमि२९.

चउत्थं छज्जीमणिआणामज्झयणं सम्मत्तं ।

प्यसौ न विराधकः. एतेन–"जले जीवाः स्थले जीवा आकाशे जीवमालिनि । जीवमालाकुले लोके कथं भिक्षुरहिंसकः" १. इत्येतत्प्रत्युक्तं तथा सूक्ष्मजीवानां विराधनाया अभावाच्च. ब्रवीमीति पूर्ववत् २९.

इति श्रीसमयसुन्दरोपाध्यायविरचितायां दशवैकालिकवृत्तौ षड्जीवनिकाध्ययनं समाप्तम् । श्रीरस्तु ।

संपर्क इति—इह पूर्वाध्ययने साधोराचार कथितः, स आचार कायस्य सति स्वास्थ्ये भवति, स्वास्थ्यं चाहार विना न भवति स चाहार शुद्धो ग्राह्य ततोऽनेन सम्बन्धेनायातमिदमध्ययनमाहारशुद्धिप्रतिपादकं व्याख्यातं तच्चेदम्, एवंविध साधु-भैक्षपानं, गवेषयेत्, यतीनां योग्यमोदनारनालमन्वेषयेदित्युक्तिः, क सति ? भिक्षाकाले भिक्षासमये संप्राप्ते शोभनेन प्रकारेण स्वाध्यायकरणादिना प्राप्ते सति, किंभूत साधुः ? असम्भ्रान्तोऽनाकुल, यथाविधि उपयोगादि कार्य कृत्वा, पुन किंभूत

अथ पंचमाध्ययनं प्रारम्भते ।

संपत्ते भिक्खकालम्मि असंभंतो अमुच्छिओ । इमेण कमजोगेण भत्तपाणं गवेसए १

से गामे वा नगरे वा गोअरग्गगओ मुणी । चरे मंदमणुव्विग्गो अव्वक्खित्तेण चेअसा २,

साधु ? अमूर्च्छितो न शब्दादिविषये पिण्डे वा मूर्च्छित, पुन किंभूतः साधु ? अगृद्धो न पिण्डादावासक्त, अनेन वक्ष्यमाणलक्षणेन क्रमयोगेन परिपाटीव्यापारेण ? यत्र यथा गवेषयेत्तथाह—से इति—सोऽसम्भ्रान्तोऽमूर्च्छितो मुनि चरे द्गच्छेत्, परं मन्दं शनै न द्रुतं, कुत्र चरेत् ? ग्रामे वा नगरे वा उपलक्षणत्वात्कर्वटादौ वा किंभूतो मुनि ? गोचराग्रगत, गौरिव चरणं गोचर उत्तममध्यमाधमकुलेषु रागद्वेषौ त्यक्त्वा भिक्षाटनम् अग्रः प्रधान आधाकर्मादिदोषरहितस्तद्गतस्तद्वर्ती?

किंभूतो मुनिः ? अनुद्विग्नः, नोद्विग्नः प्रशान्तः परीषहादिभ्यो न भयं कुर्वन्नित्यर्थः, केन ? चेतसा चित्तेन, किंभूतेन चेतसा ? अव्याक्षिप्तेनाहारस्यैषणायामुपयुक्तेनोपयोगवतेत्यर्थः २.(अथ) यथा चरेत्तथा(थैवा)ह–पुर इति–एवंविधः सन् मुनिर्महीं चरेद्यायात्. परं न शेषदिशां विलोकनेनेति शेषः. किं कुर्वाणः ? पुरतोऽग्रतो युगमात्रया शरीरप्रमाणया दृष्ट्येति शेषः. प्रेक्षमाणः प्रकर्षेण पश्यन्, पृथिवीं प्रेक्षमाण एव केवलं न, किन्तु बीजहरितानि परिहरन्. पुनः प्राणिनो द्वीन्द्रियादीन् पुनरुदकमप्कायं पुनर्मृत्तिकां पृथ्वी कायं चशब्दात्तेजोवायू च परिहरन् इति संयमविराधनायाः परिहारः कथितः. ३. अथात्मसंयमयोर्द्वयोर्विराधनापरिहारमाह–

पुरओ जुगमायाए पेहमाणो महिं चरे । वज्जंतो बीयहरियाइं पाणे अ दगमट्टिअं ३.
ओवायं विसमं खाणुं विजलं परिवज्जए । संकमेण न गच्छिज्जा विज्जमाणे परक्कमे ४.

ओवायमिति–साधुरेतत् (सर्वं) परिवर्जयेत् परिहरेत्. एतत्किमित्याह–अवपातं गर्तादिरूपं. विषमं नीचोन्नतस्थानं. स्थाणुमूर्ध्वं काष्ठं विजलं विगतजलं कर्दमं. पुनः साधुः संक्रमेण जलगर्तादिपरिहारार्थं पाषाणकाष्ठरचितेन कृत्वा न गच्छेत्. कथम् ? आत्मसंयमयोर्द्वयोर्विराधनायाः सम्भवात्, अपवादमार्गमाह–विद्यमाने पराक्रमेऽन्यमार्गे सतीत्यर्थः, असति तु तस्मिन् प्रयोजनमाश्रित्य यतनया गच्छेत्, ४. अथावपातादौ दोषमाह—

पवडमिति-एवं कुर्वन साधु प्राणिभूतानि, हिंस्यात्, प्राणिनो द्वीन्द्रियादीन्, भूतान्येकेन्द्रियादीनिति[१] एतदेवाह-त्रसानथवा स्थावरान् प्रपातेनात्मानं चेत्येवमुभयविराधना ज्ञातव्या ५ यतश्चैवं ततः किं कार्यमित्याह—तम्हेति-संयतः साधुः तस्मात्कारणात्तेनावपातादिमार्गेण न गच्छेत् किंभूतः संयतः ? सुसमाहितो भगवत आज्ञावर्ती, क सति, अन्यस्मिन् मार्गे सति अत्र सूत्रस्यासत्यर्थे तृतीया विभक्तिः अपवादमाह-असत्यन्यस्मिन् मार्गे तु तेनैवावपातादिना यतमेव यत्नेनात्मसंयमयो

पवडते व से तत्थ पक्खलते व संजए[२]। हिंसेज्ज पाणभूयाइ[३] तसे अदुव थावरे[४] ५

तम्हा तेण न गच्छिज्जा सजए सुसमाहिए[५]। सइ अन्नेण मग्गेण जयमेव परक्कमे ६

इगाल छारिय[६] रासिं तुसरासिं च गोमय। ससरक्खेहिं पाएहिं सजओ त न इक्कमे ७

विराधनायाः परिहारेण यायादिति ६ अथात्रैव विशेषतः पृथिवीकाययतनामाह—इगालमिति-संयतः साधुः अङ्गाराणामयमाङ्गारः आङ्गारं राशिं सरजस्काभ्यां सचित्तपृथिवीरजोगुण्ठिताभ्यां पादाभ्यां नाक्रमेत्, यतस्तस्याक्रमणे सचित्तपृथिवीरजोविराधना भवेत् एष राशिशब्दस्य प्रत्येक सम्बन्धात् क्षारराशिं[१] तुषराशिं गोमयराशिं च सरजस्कपादाभ्यां नाक्रमेत् ७ अथाप्कायादियतनामाह—

१—मषीव तरिमलिति क पु

नेति—साधुर्वर्षे वर्षति न चरेत्, पूर्वं भिक्षार्थं प्रविष्टोऽपि वर्षे वर्षति प्रच्छन्नस्थाने तिष्ठेत्, तथा मिहिकायां वा पतन्त्यां न चरेत्, सा च मिहिका प्रायो गर्भमासेषु भवति, तथा महावाते वाति सति न चरेत्, अन्यथा महावातेन समुत्खातस्य सचित्तरजसो विराधना भवेत्. तथा तिर्यक्सम्पतन्तीति तिर्यक्सम्पाताः पतङ्गादयः, तेषु सत्सु वा न चरेत्. ८. उक्तैवं प्रथमव्रतयतना, साम्प्रतं चतुर्थव्रतस्य यतनोच्यते—नेति—एवंविधः साधुः वेश्यासामन्ते गणिकागृहसमीपे न चरेत् न गच्छेत्, किंविशिष्टे वेश्यासामन्ते ? ब्रह्मचर्यवशानयने, ब्रह्मचर्यं मैथुनविरतिरूपं वशमानयति आयत्तं करोति दर्शनाक्षेपादिनेति ब्रह्मचर्य

न चरेज्ज वासे वासंते महियाए पडंतिए । महावाए व वायंते तिरिच्छसंपाइमेसु वा ८.

न चरेज्ज वेससामंते बंभचेरवसाणुए । बंभयारिस्स दंतस्स हुज्ज तच्छ विसुत्तिआ ९.

अणायणे चरन्तस्स संसग्गीए अभिक्खणं । हुज्जा वयाणं पीला सामन्नंमि असंसओ १०.

वशानयनं तस्मिन् को दोषस्तत्र गमनत इत्यत आह—ब्रह्मचारिणः साधोर्दान्तस्य इन्द्रियनोइन्द्रियदमाभ्यां भवेत्तत्र वेश्यासामन्ते विस्रोतसिका. कथम् ? तद्रूपदर्शनस्मरणेनाशुभध्यानकचवरानिरोधतः ज्ञानश्रद्धाजलोज्झनेन संयमशस्यशोषफला चित्तविक्रिया भवति. ९. अत्रैकवारं वेश्यासामन्तसङ्गतो दोष उक्तः साम्प्रतमिहान्यत्र च वारंवारगमने दोषमाह—अणायण इति—साधोरनायतनेऽस्थाने वेश्यासामन्तादौ चरतो गच्छतः संसर्गेण सम्बन्धेनाभीक्ष्णं पुनः पुनर्भवेद् व्रतानां

माणातिपातविरत्यादीनां पीडा भावविराधना कथं ? यतस्तदानीं स साधुस्तदाक्षिप्तचित्तो भवति पुन श्रामण्ये श्रमणभावे द्रव्यतो रजोहरणादिधारणरूपे भूयो भावतो व्रतभग्नहेतो संशय कदाचिदुन्निष्क्रामत्येव १० अथ निगमयन्नाह—तम्हेति— यस्मादेवं तस्मान्मुनि वेश्यासामन्तं वेश्यागृहसमीपं वर्जयेत्[1]। किं कृत्वा ? दोषं पूर्वोक्तं विज्ञाय किं भूत दोषं ? दुर्गतेर्वर्धनं किंभूतो मुनि ? एकान्त मोक्षमाश्रित[2] शिष्य आह—ननु प्रथमव्रतविराधनानन्तरं चतुर्थव्रतस्य विराधनाया कथमुपन्यास । उच्यते—अन्यव्रतविराधनाहेतुत्वेन चतुर्थव्रतस्य विराधनाया प्राधान्यस्थापनार्थं तच्च लेशतो दर्शितमेव ११ अथ अत्रैव विशे-

तम्हा एअ विआणित्ता दोस दुग्गइवड्ढण[3]। वज्जए वेससामंतं मुणी एगतमस्सिए[2] ११

साण सूइअं गाविं[7] दित्त गोण[8] हय गय। संडिम्भं[*] कलह[5] जुद्ध दूरओ परिवज्जए[2] १२

षमाह—साणमिति—साधुरेतानि दूरतो दूरेण परिवर्जयेत्, कानि तानीत्यत आह—श्वान प्रसिद्ध[3], सूता गां नवप्रसूतां धेनुं[3], तथा दृप्तं दर्पितं गोणं बलीवर्दं, दृप्तशब्द सर्वत्र सम्बध्यते, ततो हस हयमश्वं[4] पुनर्दृप्तं गजं हस्तिनं[5], तथा संडिम्भं बालक्रीडास्थानं कलहं वाक्प्रतिबद्धं, युद्धं खड्गादिभिः[6], कथमेतानि वर्जयेदित्यत आह—श्वसूतगोप्रभृतिभ्य आत्मविराधना स्यात्, बालक्रीडास्थाने वन्दनागतपतनभण्डनलुण्ठनादिना संयमविराधना स्यात्, सर्वत्रात्मपात्रभेदादिना उभयविराधनापि स्यात् १२

अथात्रैव विधिमाह—

अणुन्नेति—साधुरेवं चरेद्गच्छेत्. किंभूतो मुनिः ? अनुन्नतः, न उन्नतः अनुन्नतः, द्रव्यतो नाकाशदर्शी, भावतस्तु न जात्यादीनामभिमानकर्त्ता, पुनः किंभूतो मुनिः ? नावनतः, न अवनतः द्रव्यतो न नीचकायः. भावतस्तु नालब्ध्यादिना दीनः, पुनः किंभूतो मुनिः ? अप्रहृष्टो लाभादौ सति न हर्षवान्. पुनः किंभूतो मुनिः ? अनाकुलः न आकुलः क्रोधादिना रहितः, कि कृत्वा मुनिश्चरेदित्यत आह—इन्द्रियाणि स्पर्शनादीनि यथाभागं यथाविषयमिष्टेषु स्पर्शादिषु प्रवर्तमानान्यनिष्टेभ्यः स्पर्शादिभ्यो निवर्तमानानि दमयित्वा रागद्वेषरहितश्चरेदित्यर्थः. विपरीते तु प्रभूता दोषा प्रकटीभवेयुः १३. पुनराह—

अणुन्नए नावणए अप्पहिट्ठे अणाउले । इंदिआणि जहाभागं दमइत्ता मुणी चरे १३.

दवदवस्स न गच्छेज्जा भासमाणो अ गोअरे । हसंतो नाभिगच्छिज्जा कुलं उच्चावयं सया १४.

आलोअं थिग्गलं दारं संधिं दगभवणाणि अ । चरंतो न विनिज्जाए संकट्ठाणं विवज्जए १५.

दवदवस्सेत्ति—द्रुतं द्रुतं मुनिर्न गच्छेत् तु पुनर्भाषमाणो गोचरे न गच्छेत्, तथा हसन्नाभिगच्छेत्. कुलमुच्चावचं सदा उच्चं द्रव्यतो धवलगृहादि. भावतो जात्यादियुक्तम्, एवमवचं द्रव्यतः कुटीरकवासि, भावतो जात्यादिहीनम्, उभयविराधनालोकोपघातादयो दोषाः स्युः. १४. पुनरत्रैव विधिमाह—आलोअमिति—मुनिः चरन् भिक्षार्थं गच्छन्नेतानि न विनिध्यायेत्. विशेषेण न पश्येत्, कान्येतानीत्यत आह—आलोकं निर्यूहकादिरूपं, थिग्गलं भित्तिद्वारादि, सन्धिः क्षात्रं, दकभवनानि पानीय

गृहाणि, एतदालोकादीनामवलोकने शङ्कास्थानमतो विवर्जयेत्, कथं ? नष्टादौ तत्र शङ्का उपजायते १५ रन्न इति–पुन किम्भूतो मुनि ? राज्ञश्चक्रवर्त्यादे गृहपतीनां श्रेष्ठिप्रमृतीनां च रहस्यस्थानादि वर्जयेत् आरक्षकाणां च दण्डनायकानां रह स्थान गुह्यापवरकमन्त्रगृहादि[3] सङ्क्लेशकर असदिच्छामनु या मन्त्रभेदेवा कर्षणादिना दूरत परिवर्जयेत् १६ पडीति–किञ्च साधुरवविध कुलं न प्रविशत् किंभूत कुल ? प्रतिकृष्ट लोकनिषिद्धं मलिनादि द्विविधमपि निषिद्धमित्वर सूतकयुक्त यावत्क

रन्नो गिहवईण च रहस्सारक्खियाणय[3]। सकिलेसकर ठाण दूरओ परिवज्जए १६

पडिकुट्ठ कुल न पविसे[2] मामग परिवज्जए। अचिअत्त कुल न पविसे चिअत्त पविसे कुल १७

साणीपावारपिहिअं[1] अप्पणा नावे पगुरे[1]। कवाड नो पणुल्लिज्जा उग्गहसि अजाइआ १८

थिकं च निषिद्धमभोज्यं कुतो न प्रविशेत् ? शासनलघुत्वप्रसङ्गात्, पुनमामकमत्राह गृहपतिर्मा कश्चिन्मम गृहमागच्छतु, एतद् एहं वर्जयेत्, कुत ? भण्डनादिप्रसङ्गात् पुन अचिअत्तकुलम् अप्रीतिकुलं यत्र प्रविशद्भि साधुभिरप्रीतिरुत्पद्यते, न च निवारयति कुतश्चिन्निमित्तान्तरादेतन्न प्रविशेत्[3] तथा चिअत्त कुलं पर्योक्ताद्विपरीत कुल प्रविशेत, तदनुग्रहप्रसङ्गात १७ साणीति–किञ्च साधुरेषविधं, गृहमिति शेष आत्मना स्वय नापवृणुयात् नोद्घाटयेत्, किंभूतं गृह ? शाणीप्रावारपिहितं,

१ हस्तलिखित क ख ग पुस्तकेषु पाठ । २ मन्त्रागत इति प्राचीन पाठः । ३ तदपीति ग ।

शाणी शणातसीवल्कजा पटी, प्रावारः प्रतीतः, कम्बलादीनामुपलक्षणमेतत्. इत्यादिभिः पिहितं स्थगितम्, अलौकिकत्वेन च तदन्तर्गतभुजिक्रियादिकारिणां प्रद्वेषप्रसङ्गात् तथा कपाटं द्वारस्थगनं न प्रेरयेत्, पूर्वोक्तदोषप्रसङ्गात्, किमविशेषतो नेत्याह–किं कृत्वा ? अवग्रहमयाचित्वा गाढप्रयोजनेऽननुज्ञाप्यावग्रहं विधिना धर्मलाभमकृत्वा. १८. विधेः शेषमाह–गोअरेति–साधुर्गोचराग्रप्रविष्टस्तु वर्चो मूत्रं वा न धारयेत्, किन्तु अवकाशं प्रासुकं ज्ञात्वानुज्ञाप्य च व्युत्सृजेत्, अस्य वर्चोमूत्रत्यजनविधेर्विषय ओघनिर्युक्तितो वृद्धसंप्रदायाच्च ज्ञातव्यः १९. णीअेति–पुनः किञ्च साधुर्नीचद्वारं नीचनिर्गमप्रवेशं परिवर्जयेत्, न तत्र भिक्षां

गोअरग्गपविट्ठो अ वच्चमुत्तं न धारए। ओगासं फासुअं नच्चा अणुन्नविअ वोसिरे १९.

णीअदुवारं[1] तमसं कुट्ठगं परिवज्जए[2]। अचक्खुविसओ जत्थ पाणा दुप्पडिलेहगा २०.

जत्थ पुप्फाइं[1] बीआइं[2] विप्पइन्नाइं कुट्ठए[3]। अहुणोवलित्तं[4] उल्लं दट्ठूणं परिवज्जए २१.

गृह्णीयात्,[1] एवं तमसं तमोवन्तं कोष्ठकमपवरकं परिवर्जयेत्, सामान्यापेक्षया सर्व एवंविधो भवतीत्यत[2] आह–अचक्षुर्विषयो यत्र न चक्षुर्व्यापारो भवेद्यत्रेत्यर्थः, तत्र को दोष इत्याह–प्राणिनो दुष्प्रत्युपेक्षणीया भवन्ति, ईर्याशुद्धिर्न भवति. २०. जत्थेति–किञ्च साधुरेतानि परिवर्जयेद् दूरत एव, न तु तत्र धर्मलाभं कुर्यात्, संयमस्यात्मनश्च विराधनाप्राप्तेः, एतानि कानीत्याह–पुष्पाणि जातिपुष्पादीनि,[1] बीजानि शालिबीजानि,[2] किंविशिष्टानि ? विप्रकीर्णान्यनेकधा विक्षिप्तानि, परिहर्तुमशक्यानी-

त्यथ तुत्र ? काष्ठके काष्ठकद्वारे वा, तथा किं कृत्वा ? अञ्जुना उपलिप्त साम्प्रतमुपलिप्तमार्द्रकमशुष्क कोष्ठकमन्यदा दृष्ट्वा २१ पल्लगमिति—पुनः किञ्च संपतः साधुरलक मर्प,[1] दारकं बालक,[2] श्वानं मण्डल,[3] वत्सकं चापि क्षुद्रवृषभलक्षणं[4] कोष्ठके उल्लङ्घ्य पञ्चधा न प्रविशेत्, व्यूह्य वा भय न प्रविशेत्, आत्मसयमविराधनादोपाज्ञाघयाघेति २२ अत्रैव विशेषदोषमाह— असमत्तमिति—असंसक्त न प्रलोकयेत्, यापिदृष्टेदृष्टिं न मीलयेत्, रागोत्पत्तिलोकोपघातदोषात्,[5] तथा नातिदूरं प्रलोकयेत्,

पल्लग[1] दारग[2] साण[3] वत्यग[4] वा वि कुड्डए । उल्लंघिआ न पविसे विउहित्ताण व संजए २२

असंसत्त पलोइज्जा नइदूरा वलोअए । उप्फुल्लं न विनिज्झाए[3] निअट्टिज्ज अयंपिरो[4] २३

अइभूमिं न गच्छेज्जा गोअरग्गगओ मुणी । कुलस्स भूमिं जाणित्ता मिअं भूमिं परक्कमे २४

दायकस्यागमनमात्रप्रदेशं प्रलोकयेत्, चौरादिकशङ्कादोषात्,[3] तथोत्फुल्लं विकसितलोचनं न विनिध्यायेत् न निरीक्षेत गृहपरिच्छदमपि, अहो कल्याण इति लाघवोत्पत्तेः,[3] तथा निवर्तेत अलब्धेऽपि सति, परं किं कुर्वन् ? अजल्पन् दीनवचनमनुच्चरन्निति[5] २३ अइभूमिमिति—पुनरपि मुनिरतिभूमिं गृहस्थैर्या नानुज्ञाता, यत्रान्ये भिक्षाचरा न यान्ति तामतिभूमिं न गच्छेत्, किंभूतो मुनि ? गोचराग्रप्रविष्टः । अनेन कथनेन अन्यदा गोचरीं विना तत्र गमननिषेधमाह—किं तर्हि कुर्यात् ? कुलस्य भूमिसुचमादि

रूपामवस्थां ज्ञात्वा मितां भूमिं गृहस्थैरनुज्ञातां पराक्रमेत्, यत्र तेषामप्रीतिर्न जायते. २४ विधिशेषमाह–तत्थेति मुनिस्तत्रैव तस्यामेव मितायां भूमौ सूत्रोक्तविधिना भूमिभागमुचितभूमिप्रदेशं प्रत्युपेक्षेत तत्र च तिष्ठेत्, किंभूतो मुनिः ? विचक्षणो विद्वान्, एतद्विशेषणेन केवलागीतार्थस्य भिक्षाटननिषेधमाह—पुनः स्नानस्य तथा वर्चसः सल्लोकं परिवर्जयेत्, अयं परमार्थः–स्नानभूमिकायिक्यादिभूमिसन्दर्शनं परिहरेत्, कुतः ? प्रवचनलाघवप्रसङ्गात् अप्रावृतस्त्रीदर्शनाच्च रागादिसम्भवात्. २५

तत्थेव पडिलेहिज्जा भूमिभागं विअक्खणो । सिणाणस्स य वच्चस्स संलोगं परिवज्जए २५.

दगमट्टिअआयाणे बीआणि हरिआणि अ । परिवज्जंतो चिट्टिज्जा सव्विंदिअसमाहिए २६.

तत्थ से चिट्ठमाणस्स आहारे पाणभोअणं । अकप्पिअं न गेण्हिज्जा पडिगाहिज्ज कप्पिअं २७.

दगेति–पुनः किम्भूतो मुनिः ? एतानि परिवर्जयंस्तिष्ठेत् पूर्वोक्त उचितप्रदेशे, कानि ? उदकमृत्तिकयोरानयनमार्गं, पुनर्बीजानि शाल्यादीनि, हरितानि दूर्वादीनि, चशब्दादन्यान्यपि सचेतनानि, किंभूतो मुनिः ? सर्वेन्द्रियसमाहितः शब्दादिभिरव्याक्षिप्तः २६ तत्थेति–तत्रोचितभूमौ से तस्य साधोस्तिष्ठतः सतो गृहीति शेषः, पानभोजनमाहरेदानयेत्, तत्रायं विधिः–अकल्पिकमनेषणीयं न गृह्णीयान्न इच्छेत्, प्रतिगृह्णीयात् कल्पिकम्, एतच्चार्थापन्नमपि कल्पिकग्रहणं द्रव्यतः शोभनमशोभनमपि

एतद्विशेषेण प्रायमिति दर्शनार्थं साक्षादुक्तमिति २७ आहारन्तीति–अगारी, भिक्षामिति शेष, आहरन्ती आनयन्ती स्यात्क्दाचित्तत्र देशे परिशाटयेत्सिक्थानि, इतश्चेतश्च विक्षिपेद्भोजन वा पान वा, तत किमित्याह–ददतीं तां स्त्रियं प्रत्याचक्षीत, कथ प्रत्याचक्षीतेत्यत आह–न मे मम कल्पते तादृशं परिशाटनासहित सिद्धान्तोक्तदोषप्रसङ्गात्, गोपांश्च भावं च ज्ञात्वा कथये मधुबिन्दूदाहरणादिना २८ संमर्देति–सम्मर्दयन्ती पद्भ्यां समाक्रामन्ती, कानीत्यत आह–प्राणिनो द्वीन्द्रियादीन्,

आहारती सिआ तत्थ परिसाडिज्ज भोअण। दिंतिअ पडिआइक्खे न मे कप्पइ तारिस २८

सम्मद्दमाणी पाणाणि बीआणि हरिआणि अ। असंजमकरिं नच्चा तारिसिं परिवज्जए[1] २९

साहट्टु निक्खिवित्ता ण सचित्त घट्टियाणि य। तहेव समणट्ठाए उदग संपणुल्लिया[1] ३०

ओगाहइत्ता चलइत्ता आहारे पाणभोअणं[2]। दिंतिअ पडिआइक्खे न मे कप्पइ तारिस ३१

बीजानि शालिबीजादीनि, हरितानि दूर्वादीनि, असंयमकरीं साधुनिमित्तमसंयमकरणशीलां[1] ज्ञात्वा तादृशीं परिवर्जयेत्, ददतीं प्रत्याचक्षीतेति २९ साहेति–संहृत्यान्यस्मिन् भाजने ददाति, तया अदेय भाजनगतं षड्जीवनिकायेषु निक्षिप्य ददाति तया सचित्तमलातपुष्पादि घट्टयित्वा संचाल्य च ददाति, तथैव श्रमणार्थं यतिनिमित्तमुदकं पानीय सम्प्रणुद्य भाजनस्थं प्रेर्य ददाति, तदा साधु किं करोति? तद्विधिमग्रगाथायां वक्ष्यति ३० आगाहेत्ति–तथा वर्षासु गृहाङ्गणस्थितं जलमवगाह्योदक

मेवात्मनोऽभिमुखमाकृष्य करादिभिश्चालयित्वोदकमेव ददाति. उदके नियमादनन्तवनस्पतिरिति प्राधान्यख्यापनार्थं सचित्तं घट्टइत्ताणम् इत्युक्तेऽपि भेदेनोपादानम्, अस्ति चायं न्यायः–यदुत सामान्यग्रहणेऽपि प्राधान्यख्यापनार्थं भेदेनोपादानं, यथा ब्राह्मणा आयाता वशिष्ठोऽप्यायात इति. ततश्च उदकं चालयित्वा आहरेदानीय दद्यात्, किं तदित्याह–पानभोजनमोदनारनालादि, तदित्थंभूतं ददती प्रत्याचक्षीत, न मे मम कल्पते तादृशम् ३१. पुरेकम्मेति–पुरःकर्मणा हस्तेन साधुनिमित्तं पूर्वं कृतसचित्तपानीयत्यजनव्यापारेण, तथा दर्व्या डोवसदृशया, भाजनेन वा कांस्यभाजनादिना ददतीं प्रत्याचक्षीत न मम कल्पते

पुरेकम्मेण हत्थेण दव्वीए भायणेण वा। दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ३२.
(एवं) उदउल्ले ससिणिद्धे ससरक्खे मट्टिआओसे। हरिआले हिंगुलए मणोसिला अंजणे लोणे ३३.
गेरुअवन्निअसेढिअ–सोरट्ठिअपिट्ठकुकुसकए। उक्किट्ठमसंसट्ठे संसट्ठे चेव बोधव्वे ३४.

तादृशम् ३२. उदउल्ल इति–पुनरप्येवमुदकार्द्रेण गलत्पानीयबिन्दुयुक्तेन हस्तेन, एवं सस्निग्धेन ईषत्पानीययुक्तेन हस्तेन २, एवं सरजस्केन पृथिवीरजोवगुण्डितेन हस्तेन ३. एवं मृद्गतेन कर्दमयुक्तेन हस्तेन ४. एवं ऊषः पांशुक्षारस्तद्युक्तेन हस्तेन, तथा हरितालहिङ्गुलकमनःशिला एते सर्वे पार्थिवा वर्णकभेदाः, अञ्जनं रसाञ्जनादि, लवणं सामुद्रादि, ततो हरितालादियुक्तेन हस्तेन. ३३ गेरुएति–तथा गैरिको धातुः वर्णिका पीतमृत्तिका, सेटिका खटिका, सौराष्ट्रिका तुवरिका, पिष्टमामतन्दुलक्षोदः,

कुत्सा मतीता, कृतनेति एभि कृतेन, एन्य सराप्दितेन, हस्तेनेति शेष, तथा उत्कृष्ट इति, उत्कृष्टशब्देन कालिङ्गालाबु त्रपुसफलादीनां श्लक्ष्णकृतानि श्लक्ष्णखण्डानि भण्यन्ते, सिञ्चिणिकादिपत्रसमुदायो वा उदूखलकण्डित इति–तथा असंसृष्टो व्यञ्जनादिनाऽलिप्त, संसृष्टश्चैवं व्यञ्जनादिना लिप्तो बोद्धव्यो हस्त इति विधिं पुनरत्रोर्ध्व स्वयमेव वक्ष्यतीति ३४ असंसट्ठेति–असंसृष्टेन हस्तेन अन्नादिभिरलिप्तेन, तथा दर्व्या भाजनेन वा दीयमानं नेच्छेत् गृह्णीयात्, किं सामान्येन नेत्याह–पश्चात्कर्म यत्र भवति दर्व्यादौ, शुष्कमण्डकादि तदन्यदोषरहितं गृह्णीयादिति १९ संसट्ठेति–संसृष्टेन हस्तेनान्ना

असंसट्ठेण हत्थेण दव्वीए भायणेण वा । दिज्जमाणं न इच्छिज्जा पच्छा कम्मं जहिं भवे ३५

संसट्ठेण य हत्थेण दव्वीए भायणेण वा । दिज्जमाणं पडिच्छिज्जा जं तत्थेसणियं भवे ३६

दुण्हं तु भुंजमाणाणं एगो तत्थ निमंतए । दिज्जमाणं न इच्छिज्जा छंदं से पडिलेहए ३७

दिलिप्तेन, तथा दर्व्या भाजनेन वा दीयमानं प्रतीच्छेद् गृह्णीयात्, किं सामान्येन नेत्याह–यत्तत्रैषणीयं भवति तदन्यदोष रहितमित्यर्थः ३६ दुण्हमिति–किंच द्वयोर्भुञ्जतोः पालनं कुर्वतोरेकस्य वस्तुनो नायकयोरित्यर्थः, एकस्तत्र निमन्त्रयेत्तद्दानं प्रत्यामन्त्रयेत, तद्दीयमानं नेच्छेदुत्सर्गतः, अपितु–छन्दमभिप्रायं से तस्य द्वितीयस्य प्रत्युपेक्षेत नेत्रवक्त्रविकारैः, किमस्येद दीयमानमिष्टं न वेति, इष्टं च गृह्णीयाच्चेति एवं भुञ्जानयोरप्यवहारं उद्यतयोरपि योजनीयं, यतो भुजिधातुः पालने

भ्यवहारे च वर्तत इति. ३७ दुण्हमिति–तथा द्वयोस्तु पूर्ववद्भुञ्जतोर्भुञ्जानयोर्द्वावपि तत्रातिप्रसादेन निमन्त्रये-
यातां तत्रायं विधिः—दीयमानं प्रतीच्छेद् गृह्णीयात्, यत्तत्रैषणीयं भवेत्तदन्यदोषरहितमिति. ३८ विधिविशेषमाह—
गुव्विणीए इति–गुर्विण्या गर्भवत्योपन्यस्तमुपकल्पितं, किं तदित्याह—विविधमनेकप्रकारं पानभोजनं द्राक्षापानखण्ड-
खाद्यादि तत्र भुज्यमानं तया विवर्जयेत्. मा भवतु तस्य भोजनग्रहणेऽल्पत्वेन तस्या अनिवृत्तिः, अनिवृत्तौ च गर्भपातदोषः

दुण्हं तु भुंजमाणाणं दो वि तत्थ निमंतए । दिज्जमाणं पडिच्छिज्जा जं तत्थेसणियं भवे ३८.

गुव्विणीए उवण्णत्थं विविहं पाणभोअणं । भुंजमाणं विवज्जिज्जा भुत्तसेसं पडिच्छए ३९.

सिआ य समणट्ठाए गुव्विणी कालमासिणी । उट्ठिआ वा निसीइज्जा निसन्ना वा पुणुट्ठए ४०.

तं भवे भत्तपाणं तु संजयाण अकप्पिअं । दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ४१.

स्यात्, अथ च भुक्तशेषं भुक्तोद्धरितं तु प्रतीच्छेत्, यत्र पानभोजने तस्या अभिलाषो निवृत्तो भवेत्. ३९ किञ्च सिएति–एवं-
विधा गुर्विणी स्त्री स्यात्कदाचिच्चङ्क्रमणार्थं साधुनिमित्तं साधवे दानं ददामीति बुद्ध्योत्थिता सती निषीदेत्, वाथवा
निषण्णा सती स्वकायव्यापारेण पुनरुत्तिष्ठेत्, तदा साधुस्तदीयहस्तादाहारं न गृह्णीयादिति, किंविशिष्टा गुर्विणी ? कालमा-
सिणी कालमासवती, गर्भाधानान्नवममासवतीत्यर्थः. ४० तमिति–तादृशो दीयमान आहारः साधूनामकल्पिकः,अतस्तादृशमा-

हारं ददती च गुर्विणी प्रति साधु' किं वदेत्तदाह–तद्भक्तपान तु निषीदनेनोत्थानेन च दीयमानं सयतानां साधूनामकल्पिक भवद्ग्राह्य स्यात्, इह चायं संप्रदाय–यदि सा गुर्विणी निषीदनमुत्थान च न करोति, यथावस्थिता च सत्याहारं ददाति, तस्थविरकल्पिकानां साधूनां कल्पते, जिनकल्पिकानां साधूनां तु न कल्पते, यतो जिनकल्पिक प्रथमदिवसादारभ्य गुर्विण्या दीयमानमाहार न गृह्णातीति यतश्चैवमाचारस्ततो गुर्विणी तादृशमाहार दीयमानां प्रत्याचक्षीत वदेत्, किं वदत् ! तादृशं भक्तपानं मम न कल्पते ४१ पुन कथं न गृह्णीयादित्याह–थणगमिति–एवंविधा स्त्री यदि पानभोजनमाहरेद्यासदा साधुन गृह्णीयात्, किं कुर्वती ? दारकं बालक दारिकां च बालिकां, वा शब्दान्नपुसक

थणग पिज्जमाणी दारग वा कुमारिअ । त निक्खिवित्तु रोअत आहारे पाणभोअण ४२

स्तन पाययंती, किं कृत्वा ? तद्दारकादि रुदत्सद् भूम्यादौ निक्षिप्य, अयमत्र सम्प्रदाय'–गच्छवासी साधुर्यदि बाल काद्रि' स्तनजीवी भवति स्तन च पिबन् वर्तते, स रुदन्नरुदन् वा भवतु, परत बालकादिकं भूम्यादौ निक्षिप्याहारं दद्यात्तदा न गृह्णीयात्, अथ बालकादि स्तन्यं पिबति, अन्यभोजनमपि करोति, परं निक्षिप्यमाणो रोदिति, तदाप्याहारं दीयमान न गृह्णीयात्, अथ नो रोदनं करोति तदा गृह्णीयात्, अथ स्तनजीवी वर्तते, परं तत्समये निक्षिप्यमाण स्तन्यपानं न कुर्वाणोऽस्ति, परं निक्षिप्यमाणो रोदनं करोति, तदापि स्त्रिया दीयमानमाहारं नो गृह्णीयात्, अथ न कुर्वाणोऽस्ति तदा गृह्णीयात्, अथान्नमाहर्तुमा

रब्धोऽस्ति, परं स्तन्यं पिबन्नस्ति, तदा रोदनं करोतु वा मा वा साधुर्न गृह्णीयात्, अथापिबन्नपि यदि रोदिति तदापि न गृह्णीयात् अत्र शिष्यः प्राह—एवमाहारग्रहणे को दोषः ? गुरुराह—खरहस्तैर्बालकादेर्भूम्यादौ निक्षिप्यमाणस्य अस्थिरत्वेन परितापनादोषो भवेत्, मार्जारो वा तं बालादिकमपहरेत्. ४२. तमिति—एवं दीयमानां स्त्रियं प्रति प्रत्याचक्षीत साधुः, किं वदेदित्याह—तद्भक्तपानं तु पूर्वोक्तं संयतानामकल्पिकमकल्पनीयं, यतः कारणादेवं ततो ददतीं स्त्रियं प्रति प्रत्याचक्षीत वदेत्, न मम कल्पते तादृशमिति. ४३. किं बहुना ? उपदेशस्य सर्वरहस्यमाह—जमिति—यद्भक्तपानं तु कल्पाकल्पयोः ‚कल्पनीया-

तं भवे भत्तपाण तु संजयाण अकप्पिअं । दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ४३.

जं भवे भत्तपाणं तु कप्पाकप्पंमि संकिअं । दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ४४.

दगवारेण पिहिअं नीसाए पीढएण वा । लोढेण वा वि लेवेण सिलेसेण वि केणइ ४५.

कल्पनीययोर्विषये शङ्कितं भवेन्न वयं विद्मः, किमिदमुद्गमादिदोषयुक्तं किंवा नेति शङ्कास्थानं स्यात्. तादृशं भूतं कल्पनीयनिश्चयेऽजाते सत्यशनादि दीयमानां स्त्रियं प्रति साधुरिति प्रत्याचक्षीतेति वदेत्, किं ? न मम कल्पते तादृशमिति. ४४. पुनः कीदृशमाहारं न गृह्णीयादित्याह—दगेति—यदशनादि भाजनस्थं दकवारेण पानीयकुम्भेन पिहितं स्थगितं भवेत्, तथा नीसाएत्ति निस्सारिकया पेषण्या, पीठकेन काष्ठपीठादिना, लोढेन वापि शिलापुत्रकेण, तथा लेपेन वा मृल्लेपादिना, श्लेषेण वा

केनचिन्मतुसित्यादिना विहित भवेत् ४० तर्त्कि कुर्यादित्याह—तमिति—पुन' तच्चैति' पूर्वोक्तं स्थगितं स्ति वा श्रमणार्थं नात्मार्थं सक्तुस्थिय दायको दद्यात्, तदित्थ भूत ददतीं स्त्रिय साधुर्वदेत मम कल्पते तादृशमिति ४१ पुन' कीदृशं न गृह्णी यादित्याह—असणमिति—अशनं मुद्गादि, पानक वा आरनालादि, खादिम लड्डुकादि, स्वादिम हरीतक्यादि साधुर्यज्जानी यात् स्वयमामन्त्रणादिना वाग्यवान्यत' शृणुयात्, किं, ? यदिदमशनादिक, 'दाणट्ठापगड' कोऽर्थ ? कोऽपि वणिग्देशान्तरादायातो

त च उम्मिविआ दिज्जा समणट्ठा एव दावए । दिंतिअ पडिआइक्खे न मे कप्पइ तारिसं ४६

असण पाणग वा वि खाइम साइम तहा । जं जाणिज्ज सुणिज्जा वा दाणट्ठा पगड इम ४७

तारिस भत्तपाण तु सजयाण अकप्पिअ । दिंतिअ पडिआइक्खे न मे कप्पइ तारिस ४८

साधुनिमित्तं ददाति, अथवा अव्यापारपाखण्डिभ्यो ददाति, तदप्यशनादिक न गृह्णीयात् ४७ तर्त्कि कुर्यादित्यत आह—तारिसमिति—तादृशमशनादिकं ददतीं स्त्रियं प्रति साधु', किं वदेदित्याह—तद्भक्तपानं साधुपाखण्डिदानार्थं यत्प्रकल्पितं तत्सं यतानामकल्पिकं न कल्पते ग्रहीतुं, यत' कारणादेवं तद्ददतीं स्त्रियं प्रत्याचक्षीत वदेत्साधुर्यन्न मम कल्पते तादृशमिति ४८

असण मित्यादि पूर्ववत् ४९. पुनः कीदृशं न गृह्णीयादित्याह–तं भव इति–साधुः पुण्यार्थं प्रकृतं न गृह्णीयात्, कोऽर्थः ?साधुवादानङ्गीकारेण यत्पुण्यार्थं प्रकृतं, ५०. असणमिति–वनीपकार्थं, वनीपकाः कृपणाः, शेषं व्याख्यानं पूर्ववत्. ५१–५२ पुनः

असणं पाणगं वा वि खाइमं साइमं तहा । जं जाणिज्ज सुणिज्जा वा पुण्णठा पगडं इमं ४९. तं भवे भत्तपाणं तु संजयाण अकप्पिअं । दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ५०. असणं पाणगं वा वि खाइमं साइमं तहा । जं जाणिज्ज सुणिज्जा वा वणिमट्ठा पगडं इमं ५१. तं भवे भत्तपाणं तु संजयाण अकप्पिअं । दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ५२. असणं पाणगं वा वि खाइमं साइमं तहा । जं जाणिज्ज सुणिज्जा वा समणट्ठा पगडं इमं ५३. तं भवे भत्तपाणं तु संजयाण अकप्पिअं । दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ५४.

कीदृशं न गृह्णीयादित्याह–असणमिति–साधुः श्रमणार्थं प्रकृतमशनादि न गृह्णीयात्,श्रमणा निर्ग्रन्थाः शाक्यादयस्तन्निमित्तं कृतं,शेषं व्याख्यानं-पूर्ववत्.-५३पुनः कीदृशं न गृह्णीयादित्याह–तम्भवइति–स्पष्टम् ५४.

उद्दसीति—उद्दिश्य साधुनिमित्तं कृतमौद्देशिक [1] १, क्रीतकृत द्रव्यभावभेदक्रेयक्रीतं [2] २, पूतिकर्म सभाव्यमानाधाकर्मावयवे समिश्रम ३, अभ्याहृतं साधुनिमित्तं ग्रामादेरानीयमानं ४, तथा अध्यवपूरक स्वार्थमूलाद्रहणे साधुनिमित्त प्रक्षेपरूप ५, प्रामित्यं साधुनिमित्तमुच्छिद्य दानलक्षण ६, मिश्रजात चादित एव गृहस्थसंयतयोर्निमित्तं मिश्रमुपसंस्कृतम् ७, एतादृशं सर्वमशनादि साधुर्वर्जयेत्, परं न गृह्णीयात् ५५ अथोद्गमादिदोषस्य सन्देहदूरीकरणायोपायमाह—उग्गमेति—संयत साधु शुद्ध

उद्देसिअं कीअगडं पूइकम्मं च आहडं । अज्झोअरपामिच्चं मीसजायं विवज्जए ५५

उग्गमं से अ पुच्छिज्जा कस्सट्ठा केण वा कडं । सुच्चा निस्संकिअं सुद्धं पडिगाहिज्ज संजए ५६

असणं पाणगं वा वि खाइमं साइमं तहा । पुप्फेसु हुज्ज उम्मीसं बीएसु हरिएसु वा ५७

मशनादि निर्दोषं सत् प्रतिगृह्णीयात्, कथं ? पूर्वं तत्स्वामिनं कर्मकरं वा से तस्याशनादेः शङ्कितस्योद्गमं तन्निष्पत्तिरूपं पृच्छेत्, यथा कस्यार्थमेतत्केन वा कृतमेतत्, ततः किं कृत्वा ? इति तद्वच श्रुत्वा, इतीति किं ? न भवदर्थमिदमशनादि कृतं, किन्त्वन्यार्थमिति निःशङ्कितं शङ्कारहितम् ५६ पुनः कीदृशं न गृह्णीयात्तदाह—असणमिति—अशनं पानकं वापि खाद्यं स्वाद्यं तथा पुष्पै

१ द्रव्यभावकर्मभेदमिति पाठान्तरम् ।

जांतिपाटलादिभिर्बीजैर्हरितैर्वा यदि उन्मिश्रं भवेत्तदा संयतो न गृह्णीयात्. ५७. ददतीं च किं वदेत्तदाह—तमिति–पूर्ववत्. ५८. पुनः कीदृशं न गृह्णीयादित्याह–असणमिति अशनं पानकं वापि खाद्यं स्वाद्यं तथा यदि उदके सचित्तपानीयोपरि, अथवा उत्तिगपनकेषु कीटिकानगरेषु निक्षिप्तं भवेत्तदा साधुर्न गृह्णीयात्. ५९ ददतीं च किं वदेदित्याह–तमिति–पूर्ववत्. ६०. पुनः

तं भवे भत्तपाणं तु संजयाण अकप्पिअं । दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ५८.
असणं पाणगं वा वि खाइमं साइमं तहा । उदगंमि हुज्ज निक्खित्तं उत्तिगपणगेसु वा ५९.
तं भवे भत्तपाणं तु संजयाण अकप्पिअं । दिंतिअं अडिआइक्खे न मे कप्पइ तारिसं ६०.
असणं पाणगं वा वि खाइमं साइमं तहा । तेउम्मि हुज्ज निक्खित्तं तं च संघट्टिआ दए ६१.
तं भवे भत्तपाणं तु संजयाण अकप्पिअं । दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ६२.

कीदृशं न गृह्णीयादित्याह—असणमिति–अशनं पानकं खाद्यं स्वाद्यं यदि तेजसि अग्नौ निक्षिप्तं भवेत्तं संघस्य भिक्षां दद्यात्तदा साधुर्न गृह्णीयात्, कुतः दात्री संघट्टनं कुर्यात्तत्रोच्यते–अहं यावद्भिक्षां ददामि तावता मा भूत्तापातिशयेनोद्वर्तिष्यत. इति. ६१ तदा ददती प्रति साधुः किं वदेदित्याह–तमिति–पूर्ववत्. ६२. पुनः कीदृशमशनादि न गृह्णीयादित्याह–

१

एवमुत्सिक्किआ इति, यावद्भिक्षां ददामि तावन्माभूद्भिक्षायास्ततीत्युत्सिच्य दद्यात् १, एवमोत्सक्किआ इत्यपसर्प्य अति दाहभयादुत्सुकान्युत्सार्यस्पर्श २, एवमुज्जालिआ पज्जालिआ, उज्ज्वाल्याधविध्याते सकृदिन्धनप्रक्षेपेण ३, प्रज्वाल्य पुनःपुनः, एवं निव्वाविआ, निर्वाप्य दाहभयादिनेति भाव ४,एवमुस्सिंचिआ, निस्सिंचिआ उत्सिच्यातिभृतादुद्भवनभयेन, ततो वा दानार्थं तीमनादि निपिच्य तद्भाजनावहित द्रव्यमन्यत्र भाजने न दद्यात्, उद्वर्तनाभयेन चात्रहितमुदकेन निपिच्य दद्यात् ६, एव-

एव उस्सिक्कियां, ओसक्किया, उज्जालिआ, पज्जालिआ, निव्वावियां, उस्सिंचिया, निस्सिंचिया, ओवत्तिया, ओयारिया वए ६३ त भवे भत्तपाणं तु संजयाण अकप्पिअ । दिंतिअं पडिआइक्खे न मे कप्पइ तारिस ६४ हुज्ज कट्ठ सिलं वा वि इट्टालं वा वि एक्या । ठविअं संकमट्ठाए त च होज्ज चलाचलं ६५

मुवत्तिआ ओआरिया, अपवर्त्य तेनैवाभिनिक्षिप्तेन भाजनेन, अन्येन वा दद्यात्, तथावताय दाहभयादानार्थं वा दद्यात्, तदन्यस्य साधुनिमित्तयोगे न कल्पते ६३ अथ कदाचित्पूर्वोक्तमकारेण तादृशं काचिद्ददाति, तदा तां प्रति साधुः किं कथयेदित्याह—तमिति—सूत्रवत् ६४ पुनर्गोचराधिकार एव गोचरीमविष्टस्य साधोः को विधिरित्याह—हुज्जेति—एवंविध

काष्ठं शिला वा २ इष्टकाशकलं वा भवेत्, किंविशिष्टं काष्ठादि, एकदा एकस्मिन् काले वर्षाकालादौ सङ्क्रमार्थं सुखेन चलनार्थं स्थापितं तदपि च चलाचलमप्रतिष्ठितं भवेत्, न तु भवेत्-स्थिरमेव. ६५. तादृशेन चलाचलेन काष्ठादिना साधुः किं न कुर्यादित्याह–णेति–तेन काष्ठादिना भिक्षुर्न गच्छेत्, कथमित्याह–तत्र काष्ठादौ गमनेऽसंयमो दृष्टः, कथं ? काष्ठादिचलने प्राणिनामुपमर्दसंभवात्. तथा एवंविधमन्यदपि काष्ठादि परिहरेत्साधुः, विशिष्टं काष्ठादि ? गम्भीरमप्रकाशं, पुनः शुषिरमतः

ण तेण भिक्खू गच्छिज्जा दिट्ठो तत्थ असंजमो । गंभीरं झुसिरं चेव सव्विंदिअसमाहिए ६६.

निस्सेणिं फलगं पीढं उस्सवित्ता णमारुहे । मंचं कीलं च पासायं समणट्ठा एव दावए ६७.

दुरूहमाणी पडिवज्जा हत्थं पायं व लूसए । पुढविजीवे वि हिंसिज्जा जे अ तन्निस्सिया जगे ६८.

साररहितं, किंविशिष्टः साधुः ? सर्वेन्द्रियसमाहितः शब्दादिषु रागद्वेषावकुर्वाणः. ६६. पुनः कीदृशे प्रकारे न गृह्णीयादित्याह–निस्सेणिमिति–दाता श्रमणार्थं साधुनिमित्तं प्रासादं यद्यारोहेत, तदा साधुर्भिक्षां न गृह्णीयात्, किं कृत्वा प्रासादमारोहेत् ? निश्रेणिं फलकं पीठं मञ्चं कीलं चोत्सृज्योर्ध्वं कृत्वा. ६७. कथं न गृह्णीयात् ? तथा ग्रहणे दोषमाह–दुरूहेति–निश्रेणिप्रमुखमारोहन्ती स्त्री प्रपतेत्, प्रपतन्ती च हस्तं वा पादं वा लूषयेत् स्वकीयं, स्वत एव खण्डयेत्, पुनरपि कथञ्चित्तत्र स्थाने

पृथिवीजीवान् विहिंस्यात्, पुनरपि यानि तन्निश्रितानि पृथ्वीनिश्रितानि जगन्तिप्राणिन तानपि हिंस्यात् ६८ तत साधव किं कुर्वत इत्याह–एआरिसे इति–एतादृशान् पूर्वोक्तान् महादोषान् ज्ञात्वा महर्षय साधव, यस्माद्दोषकारिणीयं भिक्षा, तस्मान्मालापहृतां मालोपनीतां भिक्षां न प्रतिगृह्णन्ति, किंविशिष्टा महर्षय ? संयता, सम्यक्संयमे यतनां कुर्वाणा ६९. पुन किं किं कीदृशं कीदृशं न गृह्णन्ति तदाह–कंदमिति–साधु कन्दं सूरणादि 'वर्जयेत्' इत्युक्ति सर्वत्रालापनीया १, तथा मूलं पिण्डा

एआरिसे महादोसे जाणिऊण महेसिणो । तम्हा मालोहडं भिक्खं न पडिगिण्हंति संजया ६९,

कंदं मूलं पलंबं वा आमं छिन्नं व सन्निरं । तुंबागं सिंगबेरं च आमगं परिवज्जए ७०

तहेव सत्तुचुण्णाइं कोलचुण्णाइं आवणे[1] । सक्कुलिं फाणिअं पूअं अन्नं वा वि तहाविहं ७१,

दिरूपं २, प्रलम्बं वा तालफलादि३, आमं छिन्नं च सन्निरं, सन्निरमिति पत्रशाकं ४ तुम्बाकं त्वग्मज्जान्तर्वर्त्यार्द्रं, तुलसीमित्यन्ये ५, शृङ्गबेरं चार्द्रकम् ६, च आमकं सचित्तं ७० पुनः कीदृशं परिवर्जयदित्याह–तहेवेति–तथैव सक्तुचूर्णान् सक्तून् १, कोलचूर्णान् बदरचूर्णान् २ आपणे वीथ्यां तथा शष्कुलिं तिलपर्पटिका ३, फाणितं द्रवगुडं ४, पूपकं कणिकादिमयम् ५, अन्यद्वा तथाविधं मोदकादि ७१ तत्किमित्याह–

विक्रेति–एवम्भूतं सक्तुचूर्णादिकं दीयमानमपि साधुर्न गृह्णीयादित्यर्थः ७२ पुनः किं किं कीदृशं कीदृशं दीयमानमपि न गृह्णी-
यात्तदाह–बह्विति–साधुः पुद्गलादिकं दीयमानमपि न गृह्णीयादित्युक्तिः पुद्गलं मांसं, किम्भूतं पुद्गलं ? बह्वस्थिकं, तथा अनि-
मिषं वा मत्स्यं, किंभूतमनिमिषं ? बहुकण्टकम्, अयं किल कालाद्यपेक्षया ग्रहणे प्रतिषेधः, अन्ये त्वभिदधति वनस्पत्यधिका-
रात्तथाविधफलाभिधाने एते इति. तथा चाह–अस्थिकमास्थिकवृक्षफलं, तिन्दुकं तिन्दुरुकीफलं, बिल्वमिक्षुखण्डं चैतद्

दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ७२.
विक्कायमाणं पसढं रएणं परिफासिअं । दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ७२.
बहुअट्ठियं पुग्गलं अणिमिसं वा बहुकंटयं । अत्थियं तिंदुयं बिल्लं उच्छुखंडं व सिंबलिं ७३.
अप्पे सिआ भोअणजाए बहुउज्झियधम्मिए । दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ७४.
तहेवुच्चावयं पाणं अदुवा वारधोअणं । संसेइमं चाउलोदगं अहुणाधोअं विवज्जए ७५

द्वयमपि प्रसिद्धं, शाल्मलीं वा वल्लादि फलिं च. ७३. एतद्ग्रहणे दोषमाह—अप्पे इति–बहुअट्ठिअपुग्गलादिके भक्षिते सत्यल्प
स्याद्भोजनजातं. तथैतद्बहूज्झनधर्मकं च, यतश्चैवं ततो ददती प्रति साधुर्वदेत् न मम कल्पते तादृशमिति. ७४. उक्तोऽशनविधिः,
अथ पानविधिमाह–तहेति–एवंविधं पानं गृह्णीयात्, किंविधं पानं ? तथैवोच्चावचं, तथैव यथाशनमुच्चावचम्, उच्चं वर्णाद्युपेतं

ग्रासापानादि, अथवं वर्णादिहीनं पूत्यारनालादि, अथवा वारकधावनं गुडघटधावनादि धान्यस्थालीक्षालनादि, सस्वेदज पिष्टोदकादि, एतदशनवदुत्सर्गापवादाभ्यां साधुर्गृह्णीयादिति वाक्यशेषः तन्दुलोदकमधुनाधौतमपरिणतं साधुर्विवर्जयेत् ७५ अत्रैव विधिमाह—जमिति—साधुर्यत्तन्दुलोदकमेवं जानीयात् तद् गृह्णीयादिति शेषः, किंविशिष्टं तन्दुलोदकं ? चिरात्पीत, कथं जानीयादित्याह मत्या तद्ग्रहणादिकर्मजया, तथा दर्शनेन वा वर्णादिपरिणतसूत्रानुसारेण वा, किं कृत्वा ? इति गृहस्थं पृष्ट्वा इतीति किं ? कियती वेलास्य धौतस्य जातेति, च पुनरिति श्रुत्वा गृहस्थाद्, इतीति किं ? महती वेला जातास्य धौतस्येति

ज जाणेज्ज चिरा धोय मईए दसणेण वा । पडिपुच्छिऊण सुच्चा वा ज च निस्सकिअ भवे ७६

अजीवं परिणयं नच्चा पडिगाहिज्ज संजए । अह संकिय भविज्जा आसाइत्ताण रोअए ७७

एव च यन्निःशङ्कितं भवति तद् गृह्णीयादिति ७६ अथोष्णोदकादिविधिमाह—अजीवमिति—संयतः साधुरेवंविधमुष्णोदकं गृह्णीयादित्युक्तिः, किं कृत्वा ? अजीवं प्रासुकं, तथा परिणतं त्रिदण्डोत्कलितं, चतुर्थरसमप्यपूत्यादि देहोपकारकं मत्या दर्शनेन वा ज्ञात्वा शङ्कितं भवेत्पूत्यादिभावेन, ततः तत्पानीयमास्वाद्य रोचयेद्विनिश्चयं कुर्यात् ७७ अथ केन विधिना विनिश्चयं कुर्यादित्याह—

थोवेति–साधुर्दातारं प्रत्येवं वदेत्, एवं किं ? मे मम हस्ते आस्वादनार्थं स्तोकं पानीयं प्रथमं देहि ? यदि साधोरुपभोग्यं ततो ग्रहीष्ये, मा मे मम अत्यम्लं पूति तृषापनोदाय नालं समर्थं, ततः किमनेनाप्रयोजनेनेति. तत आस्वादितं सच्च तत्साधुयोग्यं चेद्भवति तदा गृह्यत एव, नो चेत्तदाऽग्राह्यम् ७८. अथ कदाचित् स्त्री तदत्यम्लमपि ददाति तदा तां ददतीं प्रति साधुः किं वक्ति तदाह—तमिति–तच्चात्यम्लं पूति नालं समर्थं तृष्णां विनेतुं, ततो ददतीं प्रति वक्ति न मम कल्पते तादृशमिति. ७९.

थोवमासायणट्ठाए हत्थगंमि दलाहि मे । मामे अच्चंबिलं पूअं नालं तिन्हं विणित्तए ७८.
तं च अच्चंबिलं पूयं नालं तिन्हं विणित्तए । दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ७९.
तं च होज्ज अकामेणं विमणेण पडिच्छिअं । तं अप्पणा न पिबे नो वि अन्नस्स दावए ८०.
एगंतमवक्कमित्ता अचित्तं पडिलेहिआ । जयं परिट्ठविज्जा परिट्ठप्प पडिक्कमे ८१.

अथाकामादिना कदाचित्तदत्यम्लादिकं गृहीतं तदा को विधिस्तदाह–तमिति–एवंविधमत्यम्लादि साधुना कदाचिदकामेनामहवशेन विमनस्केनान्यचित्तेन प्रतीच्छितं गृहीतं भवेत्तदापि तत्साधुर्न पिबेत्कायस्यापकारकमित्यनाभोगधर्मश्रद्धयापि, नापि अन्येभ्यो दापयेत्, रत्नाधिकेनापि स्वयं दानस्य प्रतिषेधज्ञापनार्थं दापनग्रहणम् इह चेयं भावना–'सव्वत्थ संजमं संजमाओ अप्पाणं चेव रक्खिज्जा' इति. ८०. ननु स्वयं तादृशं न पिबेदन्यस्य न पाययेत्तर्हि किं कुर्यादित्याह–एगमिति–साधुस्तत्पूर्व

गृहीतमत्यम्लादिक प्रतिष्ठापयेद्विधिना व्युत्सृजेत्, किं कृत्वा ? एकान्तं स्थानमपक्रम्य गत्वा अचित्तं दग्धप्रदेशादिस्थानं प्रत्युपेक्ष्य चक्षुषा, प्रमृज्य च रजोहरणेन स्थण्डिलमिति शेष , कथं प्रतिष्ठापयेत् ? यतमत्वरितं न शीघ्रं प्रतिष्ठापनानन्तरं किं कुर्यादित्याह–प्रतिष्ठाप्य वसतिमुपाश्रयमागत सन् प्रतिक्रामेदीर्यापथिकीम्, एतञ्च बहिरागतनियमप्रकरणसिद्ध प्रतिक्रमणमब हिरपि प्रतिष्ठाप्य प्रतिक्रमणनियमज्ञापनार्थमिति ८१ एवमन्नपानग्रहणविधिं कथयित्वा भोजनविधिमाह–सिया ति–स्यादिति साधु पिपासाद्यभिभूत स्यात् कदाचिद्गोचराग्रगतो ग्रामान्तर भिक्षार्थं प्रविष्ट सन् परिभोक्तुमिच्छेत्तदा तत्र वसतिर्नास्ति

सिआ अ गोयरग्गगओ इच्छिज्जा परिभुत्तुअ । कुट्ठग[1] भित्तिमूलं[2] वा पडिलेहित्ता ण फासुअं ८२

अणुन्नवित्तु मेहावी पडिच्छन्नमि[2] संवुडे[3] । हत्थग संपमज्जित्ता तत्थ भुंजिज्ज संजए ८३

तदा कोष्ठकं शून्य च मठादि[1] भित्तिमूलं वा कुड्यैकदेशादीत्याह[2] ८२ अणुन्नवेति–संयत साधुस्तत्र स्थाने वक्ष्यमाणेन विधिना रागद्वेषरहित सन् भुञ्जीत, किं कृत्वा ? तत्स्वामिनमवग्रहमनुज्ञाप्यादेश गृहीत्वा सागारिकपरिहारतो विश्रामणव्याजेन किंभूत संयत ? मेधावी साधुसामाचारीविधिज्ञ, किंभूते कोष्ठकादिस्थाने ? प्रतिच्छन्ने, उपरि तृणादिभिराच्छादिते, नाश्रार्शे,[1] किंभूत संयत ? संवृत उपयुक्त सन्नीर्यापतिक्रमणं कृत्वा,[2] ततो हस्तक मुखवस्त्रिकारूपमादायेति शेष:, तेन

विधिना कायं सम्प्रमृज्य भुञ्जीत ८३. अथ तत्र भुञ्जानस्य साधोरस्थि वा कण्टकादि वा स्यात्तदा साधुः किं कुर्यादित्याह—तत्थेति—तत्र कोष्ठकादौ से तस्य साधोर्भुञ्जानस्यास्थि वा कण्टको वा स्यात्, अन्ये वदन्ति—कथञ्चिद्गृहिणां प्रमाददोषात्कारणगृहीते पुद्गल एव, तृणं वा काष्ठं वा शर्करा वा स्यात्, अन्यद्वापि तथाविधं बदरकण्टकादि वा स्यात् ८४. तमिति—साधुः तदस्थ्यादिकमुत्क्षिप्य हस्तेन यत्र क्वचिन्न निक्षिपेत्, तथास्येन मुखेन नोज्झेत्, माभूद्विराधनेति हेतोः, अपि तु किं कुर्यात् ?

तत्थ से भुंजमाणस्य अट्ठिअं कंटओ सिआ। तणकट्ठसक्करं वा वि अन्नं वा वि तहाविहं ८४.
तं उक्खिवित्तु न निक्खिवे आसएण न छड्डुए। हत्थेण तं गहेऊण एगंतमवक्कमे ८५.
एगंतमवक्कमित्ता अचित्तं पडिलेहिआ। जयं परिट्ठविज्जा परिट्ठप्प पडिक्कमे ८६.
सिआ य भिक्खू इच्छिज्जा सिज्जागम्मभुत्तुअं। सपिंडपायमागम्म उंडुअं से पडिलेहिआ ८७.

हस्तेन तदस्थ्यादिकं गृहीत्वैकान्तं निर्व्यञ्जनं स्थानमवक्रामेद्गच्छेत् ८५. तत्र गत्वा किं कुर्यादित्याह—एगंतमिति—साधुस्तदस्थ्यादिकं यतमत्वरितं प्रतिष्ठापयेत्, किं कृत्वा ? एकान्तमवक्रम्य गत्वा, पुनः किं कृत्वा ? अचित्तं प्राशुकं प्रत्युपेक्ष्य चक्षुषा, रजोहरणेन प्रमार्ज्य च परिष्ठाप्य च प्रतिक्रामेदीर्यापथिकीमिति ८६. अथ वसतिमाधिकृत्य भोजनविधिमाह—सिएति—स्यात्कदा-

निसदन्यकारणाभावे सति भिक्षुरिच्छेद् शय्यां वसतिं, किं कृत्वा? आगम्य तत्रागत्य, किमर्थं ? परिभोक्तुं भोजननिमित्तं,तत्राय गिधि–सपिण्डपातं पिण्डपातेन विशुद्धसमुदानेनागम्य, वसतिमिति शेषः, बहिरेवोण्डुकं स्थानं प्रत्युपेक्ष्य विधिना तमस्य पिण्डपातं विशोध्यैव ८७ ततः पश्चात्किं कुर्यादित्याह—विणयेणमिति—साधुस्तत्रागतो गुरुसमीपं प्रतिक्रामेत्कायोत्सर्गं कुर्यात्, किं कृत्वा? गुरुसगासे इरियावहिअं आयाय गुरुसमीपे ईर्यापथिकां 'इच्छामि पडिक्कमिउं' इत्यादि पाठरूपाम् आयाय पठित्वा, पुनः किं कृत्वा ? 'विणएण पविसित्ता' पूर्वं पिण्डं विशोध्य बहिर्विनयेन 'नैषेधिकीनमः' क्षमाश्रमणेभ्योञ्जलिकरण

विणएण पविसित्ता सगासे गुरुणो मुणी । इरियावहियमायाय आगओ अ पडिक्कमे ८८

आभोइत्ताण नीसेसं अइआरं जहक्कमं । गमणागमणे चेव भत्ते पाणे च संजए ८९

उज्जुपन्नो अणुव्विग्गो अव्वक्खित्तेण चेअसा । अलोए गुरुसगासे जं जहा गहिअं भवे ९०

लक्षणेन, वसतिमिति शेषः, प्रविश्य ८८ ततः किं कुर्यादित्याह—आभोइत्ते—साधुः कायोत्सर्गस्थस्तमतिचारं हृदये स्थापयेत्, किम्भूतमतिचारं ? निःशेषं यथाक्रमं परिपाट्या, किं कृत्वा ? तत्र कायोत्सर्गे आभोगयित्वा ज्ञात्वा, कुत्रेत्याह—गमनागमनयोः, गमने गच्छतः आगमने आगच्छतः, पुनः भक्तपानयोः, भक्ते पाने च ८९ कायोत्सर्गे पारिते च किं कुर्यादित्याह—उज्जुपन्ने—साधुरशनादि यथा येन प्रकारेण हस्तप्रदानादिना गृहीतं भवेत्तद्गुरुसमीपे आलोचयेद्गुरोर्निवेदयेदिति

भावः, केन ? एवंविधेन चेतसा, किंभूतेन चेतसा, अव्वक्खित्तेण, अव्याक्षिप्तेनान्यत्रोपयोगमगच्छता, किंभूतः साधुः ? ऋजुप्रज्ञोऽकुटिलमतिः, पुनः किंभूतः साधुः ? अनुद्विग्नः, सर्वत्र क्षुदादिजयात्प्रशान्तः ९०. ततः किं कुर्यादित्याह—नेति—साधुस्तस्य सूक्ष्मातिचारस्य यत्पूर्वं कृतं तत्पुरःकर्म, यत्पश्चात्कृतं तत्पश्चात्कर्म सूक्ष्मं न सम्यगालोचितं भवेत्, कुतः ? अज्ञानादनाभोगेनाननुस्मरणाद्वा, तत्सर्वं पुनरालोचनानन्तरकालं प्रतिक्रामेत्, किं कृत्वा ? 'इच्छामि

न सम्ममालोइअं कुज्जा पुव्विं पच्छा व जं कडं। पुणो पडिक्कमे तस्स वोसट्ठो चिंतए इमं ९१.

अहो जिणेहिं असावज्जा वित्ती साहूण देसिआ। मुक्खसाहणहेउस्स साहुदेहस्स धारणा ९२.

णमुक्कारेण पारित्ता करित्ता जिणसंथवं। सज्झायं पठवित्ता णं वीसमेज्ज खणं मुणी ९३.

पडिक्कमिउं गोअरचरिआए' इत्यादि सूत्रं पठित्वा, ततो व्युत्सृष्टः कायोत्सर्गस्थ इदं वक्ष्यमाणं गाथारूपं चिन्तयेत्. ९१. किं चिन्तयेत्तदाह—अहो इति—अहो इति विस्मये जिनैस्तीर्थकरैः साधूनां वृत्तिर्दर्शिता देशिता वा, किंभूता वृत्तिः ? असावद्या अपापा, कस्मै ? साधुदेहस्य धारणाय धारणार्थं, किंभूतस्य साधुदेहस्य? मोक्षसाधनहेतो; मोक्षसाधनं ज्ञानदर्शनचारित्ररूपं, तस्य हेतोः. ९२ ततः किं कुर्यादित्याह—णमुक्कारेति—मुनिः क्षणं स्तोककालं विश्राम्येत्, कि कृत्वा ? नमस्कारेण नमो अरि-

इन्तागमिति कथनरूपेण कायोत्सर्गं पारयित्वा, पुनः किं कृत्वा ? जिनसंस्तवं लोगस्सुज्जोयगरे इत्यादिरूपम्,कृत्वा अतो यदि न एवं प्रस्थापितस्ततः स्वाध्यायं प्रस्थाप्य मण्डल्युपजीवकस्तं स्वाध्यायमेव कुर्यात्, यावदन्ये आगच्छन्ति, यः पुनस्तदन्यः क्षपकादि सोऽपि प्रस्थाप्य विश्राम्येत् ९३ पुनः साधुर्विश्रामानन्तरं किं कुर्यादित्याह—वीसेति—साधुर्विश्राम्यन्निदं हितं कल्याणमापकमर्थं वक्ष्यमाणलक्षणं चिन्तयेत्, केन ? चेतसा परिणतेन मनसा, किंभूतः साधुः ? लाभेन निर्जरादिनार्थोऽस्येति लाभार्थिक सन्, कथमित्याह—यत एवं जानाति यदि मे मम साधवो मयानीतो यः प्रासुकः पिण्डस्तस्य ग्रहणे

वीसमंतो इमं चिंते हियमट्ठं लाभमट्ठिओ। जइमे अणुग्गहं कुज्जा साहू हुज्जामि तारिओ ९४

साहवो तो चिअत्तेण निमन्तिज्ज जहक्कमं । जइ तत्थ केइ इच्छिज्जा तेहिं सद्धिं तु भुंजए ९५

नाऽग्रहं प्रसादं कुर्युस्तदाहं तारितो भवसमुद्रात्स्यां भवामि, एवं चिन्तयित्वोचितवेलायां साधुराचार्यमामन्त्रयेत्, यद्याचार्यो गृह्णाति ततो भव्यं, कदाचित्स स्वयं न गृह्णाति तदा तस्य वाच्यं—' हे भगवन् ! देहि केभ्यश्चित् ' इत्युक्ते यदि साधुः किं दातव्यं कस्यापि ददाति तदा सुन्दरम्, अथाचार्यो भणति त्वमेव देहि ९४ तदा किं कुर्यादित्याह—साहव इति—साधुस्ततो गुणानुज्ञातः सन् यथाक्रमं यथारत्नाधिकतया ग्रहणोचितापेक्षया बालादिक्रमेणेत्यन्ये वदन्ति,साधूनिमन्त्रयेत्, केन? चियत्तेण

मनःप्रीत्या, ततो यदि केचन धर्मबान्धवा इच्छेयुरङ्गीकुर्युस्तदा तैः सार्धमुचितसंविभागदानेन साधुर्भुञ्जीत. ९५ अथ कोऽपि नेच्छेत्तदा किं कुर्यादित्याह—आहेति—अथ कोऽपि साधुर्नेच्छेत्तदा साधुरेकाकी रागादिरहितो भुञ्जीत, कथं भुञ्जीतेत्याह—आलोकभाजने मक्षिकादीनामपोहाय प्रकाशप्रधाने भाजन इत्यर्थः, यतः प्रयत्नेन तत्रोपयुक्तः, किं कुर्वन् ? अपरिशातयन्, हस्तमुखाभ्यां कणमात्रमपि न त्यजन्. ९६ अथ भोज्यमाश्रित्य विशेषमाह—तित्तगमिति संयत एवंविधमप्यशनादि मधुघृतमिव मधुघृतसमानं मृष्टमिति ज्ञात्वा भुञ्जीत, किंविशिष्टमशनादि ? तिक्तं वा एलुकवालुकादि, कटुकमार्द्रतीमनादि,

अह कोइ न इच्छिज्जा तओ भुंजिज्ज एक्कओ। आलोए भायणे साहू जयं अप्परिसाडियं ९६

तित्तगं व कडुअं व कसायं अंबिलं व महुरं लवणं वा। एअलद्धमन्नत्थ पउत्तं महु घयं व भुंजिज्ज संजए९७.

अरसं विरसं वा वि सूइअं वा असूइअं। उल्लं वा जइ वा सुक्कं मंथूकुम्मासभोअणं ९८.

कषायं वल्लादि, अम्बिलं वा अम्लं तक्रारनालादि, मधुरं क्षीरदध्यादि, लवणं वा प्रकृतिक्षारं, तथाविधशाकादि अन्यद्वा लवणोत्कटम्, एतल्लब्धमागमे उक्तेन विधिना प्राप्तं, पुनः कीदृशम् ? अन्यार्थप्रयुक्तम्, अन्यार्थमक्षोपाङ्गन्यायेन देहार्थं परमार्थतो हि तत्साधकमिति कृत्वा मोक्षार्थं प्रयुक्तं, परं न वर्णाद्यर्थम् ९७. पुनः कीदृशमशनादीत्याह—अरसमिति—एतादृशं भोजनं वर्तते, तस्याग्रिमगाथया सह योजना कार्या, किंभूतमशनादि भोजनम् ? अरसं रसवर्जितं हिंग्वादिभिरसंस्कृतं, पुनः

किंभूतं ? विरसं वा विगतरसं पुराणमोदनादि,[१] पु० किंभूतं ? सूचितं व्यञ्जनादियुक्तं, वाथवा असूचितं व्यञ्जनादिरहितम्, अन्ये त्वेवमर्थ कुर्वन्ति-सूचितं कथयित्वा दत्तम्,[३] असूचितमकथयित्वा वा दत्तं, पुनः किंभूतम् ? आर्द्रं प्रचुरव्यञ्जनं,[४] यदि वा शुष्कं स्तोकव्यञ्जनं[५] किंभूतं तदित्याह-मन्थुकुल्मासभोजनं, मन्थु बदरचूर्णादि, कुल्माषाः सिद्धमाषा', केचिद्वदन्ति कुल्माषा यवमाषा' ९८ एतद्भोजनं किमित्याह—उप्पण्णमिति-एवं पूर्वोक्तमरसादिकमशनादि साधुर्भुञ्जीत, परं नातिहीलयेत् सर्वथा न निन्देत्, किंभूतमशनं ? विधिना प्राप्तमल्पं भवेत्तदा नैवं ज्ञातव्यं वक्तव्यं वा, यत्किमेतदल्पमात्रं न देहपूरकमपि, तथा

उप्पण्ण नाइ हीलिज्जा अप्प वा बहु[१] फासुअं । मुहालद्धं मुहाजीवी[२] भुंजिज्जा दोसवज्जिअं ९९

बहु वासारमार्यं किमनेनासारेण,[२] किंभूतमशनं ? प्रासुकं प्रासुकं, यस्मात्प्राणा गता निर्जीवं जातम् अन्ये त्वाचार्या इत्थं व्याख्यां कुर्वंति-अल्पशब्दादिरसादि वा बहु प्रासुकं सर्वथा शुद्धं नातिहीलयेत्, अपि त्वेवं भावयेत्-यदेवेह लोका ममानुपकारिणः प्रयच्छन्ति तदेव शोभनमिति किंभूतमशनं ? मुधा लब्धं मन्त्रतन्त्रादिना अप्राप्त, किंभूत' साधु ? मुधाजीवी सर्वथाप्रनिदानजीवी[१] अन्ये वदन्ति जात्यादिना न जीवी,[२] एवंविधमशनादिदोषवर्जितं संयोजनादिदोषवर्जित साधुर्भुञ्जीत ९९

मुधाजीवीति दुर्लभमेतद्दर्शयति–दुल्लहेति–दुर्लभा एवंविधा दातारस्तथाविधभागवतवत्. मुंधाजीविनोऽपि दुर्लभास्तथाविधचेल्लकवत्, एतयोः कथानके वृत्तितो ज्ञेये. अमीषां फलमाह–मुधा दातारो मुधाजीविनश्च द्वावप्येतौ सुगतिं सिद्धिगतिं गच्छन्ति. कदाचित्तस्मिन्नेव भवे कदाचिद्देवलोकसुमानुषत्वप्रत्यागमनपरम्परया. ब्रवीमीति पूर्ववत्. १००. इति श्रीदशवैकालिकसूत्रस्य शब्दार्थवृत्तौ श्रीसमयसुन्दरोपाध्यायविरचितायां पिण्डैषणाध्ययनस्य प्रथमोद्देशकः समाप्तः १.

दुल्लहाओ मुहादाई मुहाजीवी वि दुल्लहा। मुहादाई मुहाजीवी दो वि गच्छंति सुग्गइं। ति बेमि १००

पिंडेसणाए पढमो उद्देसो सम्मत्तो १.

अथ पिण्डैषणायाः प्रथमोद्देशे यदुपयोगि नोक्तं, तद् द्वितीयोद्देशके दर्शयन्नाह—

पडिग्गहं संलिहित्ताणं लेवमायाइ संजए। दुगंधं वा सुगंधं वा सव्वं भुंजे न छड्डुए १.

सेज्जा निसीहियाए समावन्नो अ गोअरे। अयावयट्ठा भुच्चा णं जइ तेण न संथरे २.

पडिग्गहमिति–संयतः साधुर्दुर्गन्धि वा सुगन्धि वा भोजनजातं सर्वं समस्तं भुञ्जीताश्नीयात् परं नोज्झेत्, अत्र गन्धग्रहणं रसादीनामुपलक्षणं, कुतो नोज्झेत् ? उच्यते—संयमविराधनाभयात्, किं कृत्वा ? प्रतिग्रहं पात्रं सँल्लिह्य प्रदेशिन्या निरवयवं कृत्वा, कया ? लेपमर्यादया आलेपं सँल्लिह्य. १. विशेषमाह–सेज्जेति–यदि क्षपको ग्लानादिर्वा तेन भुक्तेन न संस्तरेन्न यापयितुं

समर्थ', तदा द्वितीयवेलामपि गोचरे भक्तपान गवेपयेदित्यग्रिमगाथाया' सम्बन्ध' किंभूत क्षपकादि' ? ' सेज्जा निसीहियाए समावन्नो' शय्यायां वसतौ नैपेधिक्यां स्वाध्यायभूमौ, अथवा क्षय्यैवासमञ्जसनिषेधान्नैषेधिकी तस्यां समापन्न' सन्, किं कृत्वा ? अयावदर्थं भुक्त्वा, न यावदर्थमपरिसमाप्तमित्यर्थ' णे वाक्यालङ्कारे २ यद्येकवारं भुक्तेन न संस्तरेत्तदा किं कुर्यादित्याह– तओ इति—पुष्टालम्बन' साधुस्तत' कारणे वेदनादावुत्पन्ने द्वितीयवारमपि भक्तपानं गवेपयेदन्वेषयेत्, अन्यथा यतीनामे- कवारमेव भक्तगवेपणमुक्तं, केन ? विधिना, किंभूतेन विधिना, पूर्वोक्तेन, सम्पत्ते भिक्षाकाले इत्यादिना, च पुन', अनेन वक्ष्य

तओ कारणमुप्पण्णे भत्तपाण गवेसए । विहिणा पुव्वउत्तेण इमेण उत्तरेण य ३

कालेण निक्खमे भिक्खू कालेण य पडिक्कमे । अकाल च विवज्जित्ता काले काल समायरे ४

माणलक्षणेनोत्तरेण ३ तदेव वक्ष्यमाणलक्षणमाह–कालेणेति–भिक्षु' साधुर्वसते' सकाशाद्भिक्षायै निष्क्रामेत्, केन ? कालेन करणभूतेन, क' कालः ? यो यस्मिन् ग्रामादौ भिक्षायाम्रुचित' पुनर्भिक्षुः कालेन तेनैव यावता स्वाध्यायादि निष्पद्यते तावता प्रतिक्रमेन्निवर्तेत, पुनर्भिक्षु' काले भिक्षावेलायां काले भिक्षां समाचरेत्, किं कृत्वा ? अकालं च वर्जयित्वा, कोऽकाल' ? येन का लेन स्वाध्यायादि न सम्पाद्यते स किलाकालः, स्वाध्यायादीनि हि स्वाध्यायवेलायामेव क्रियन्ते, ४ अकाले गोचरीगमने दोपमाह–

अकाल इति—कोऽपि साधुरकाले भिक्षार्थं प्रविष्टः, अथाकालचारित्वेन भिक्षा न लब्धा, तदान्येन केनापि साधुना पृष्टः, भो भिक्षा त्वया प्राप्ता न वेति ? तदा स वदति कुतोऽत्र स्थण्डिलसन्निवेशे भिक्षाप्राप्तिः ? तदान्यः साधुः पृच्छाकृत्तमकालचारिणं वदति, हे भिक्षो ! त्वमकाले चरसि, कस्मात् ? प्रमादात् स्वाध्यायलोभाद्वा,पुनस्त्वं कालं किमयं भिक्षाकालो न वेत्यादिरूपं न प्रत्युपेक्षसे न जानासि, च पुनस्त्वकालचरणेनात्मानं क्लामयासि दीर्घभ्रमणेनोनोदरताभावेन च, च पुनः सन्निवेशं ग्रामादिकमवर्णवादेन गर्हसि, ततो भगवत आज्ञालोपेन दैन्यप्रतिपत्त्या च तव महान् दोषः सम्भाव्यते, तस्मादकालाटनं न

अकाले चरिसी भिक्खू कालं न पिडिलेहिासि । अप्पाणं च किलामेसि संनिवेसं च गरिहसि ५.

सइ काले चरे भिक्खू कुज्जा पुरिसकारिअं। अलाभु त्ति न सोइज्जा तवुत्ति अहिआसए ६

श्रेय इति. ५. ततः साधुः किं कुर्यादित्याह—सईति–भिक्षुः काले सति भिक्षाकाले जाते सति चरेद्भिक्षार्थं गच्छेत्. अन्ये पुनः 'सइकाले' इत्यस्यैवमर्थं कुर्वन्ति–स्मृतिकालो भिक्षाकालो यत्र भिक्षुः स्मर्यते, तस्मिन् पुनर्भिक्षुः पुरुषकारं जङ्घाबले सति वीर्याचारं न लङ्घयेत्, तत्र चालाभे सति भिक्षाया अप्राप्तौ सत्यां भिक्षुर्न शोचयेत् किन्त्वेवं भावयेत्–मया भिक्षा न लब्धा परं वीर्याचारस्त्वाराधितः, वीर्याचारार्थमपि भिक्षाटनं न केवलमाहारार्थमेव, अतो न शोचयेत्, अपि तु तप इत्यधिसहेत, अन-

शनमूनोदरतादि वा तपोऽपि भविष्यतीति सम्यगिधचिन्तयेत् ६ कालयतनोक्ता, अथ क्षेत्रयतनामाह—तहेति–भिक्षुस्तद्वत्कुर्व तेषां प्राणिनामभिमुखं संमुखं न गच्छेत्, तेषां केषां ? ये प्राणा' प्राणिनो भक्तार्थं बलिप्राभृतकादिषु समागता भवन्ति, कथं ? तेषां सन्त्रासेनान्तरायदोषो भवेत्, तर्हि किं कुर्यात् ? यतमेव पराक्रमेत्तेषामुद्वेगमनुत्पादयन्, किंभूता' प्राणिनः, तथैवोच्चा हंसादयः, अथवा' काकादय', शोभनाशोभनभेदेन नानाप्रकाराः ७ पुनर्गोचरीगत' साधु' किं न कुर्यादित्याह–गोअरेति–साधु

तहेवुच्चावया पाणा भत्तट्ठाए समागया। तउज्जुअं न गच्छिज्जा जयमेव परक्कमे ७

गोअरग्गपविट्ठो अ न निसीइज्ज कत्थई। कहं च न पबंधिज्जा चिट्ठित्ता ण व संजए ८

अग्गलं फलिहं दारं कवाडं वा वि संजए। अवलंबिआ न चिट्ठिज्जा गोअरग्गगओ मुणी ९

गोचराग्रप्रविष्टस्तु भिक्षार्थं प्रविष्टः सन् न निषीदेन्नोपविशेत्क्वचिद्गृहद्वारादौ, यतस्तत्र निषीदने संयमस्य घातो भवति, च पुन कथां धर्मकथादिरूपां न प्रबंधेनात्मप्रबन्धेन न कुर्यात्, अनेनैकव्याकरणे एकज्ञातकथने चानुज्ञामाह, एतदेवाह–किं कृत्वा ? स्थित्वा, कालपरिग्रहेण संयतो यतिरेवं च क्रियमाणे अनेषणाद्वेषादिदोषप्रसङ्गो भवेत् ८ क्षेत्रयतनोक्ता, अथ द्रव्ययतना माह–अग्गलमिति–संयतो यतिरर्गलां गोपुरकपाटादिसम्बन्धिनीं, परिघं कपाटकादिस्थगनं, द्वारं शाखामयं, कपाटं द्वारयन्त्रं

१ भक्तार्थमिति क॰ पु ।

गोचराग्रगतो भिक्षायां प्रविष्टः. ९.
वावलम्ब्य न तिष्ठेत्, कथं ? एवमवलम्बने लाघवविराधनादोषो भवेत्. किंभूतः संयतः ?. गोचराग्रगतो भिक्षायां प्रविष्टः. ९. उक्ता द्रव्यविराधना, भावविराधनामाह–समणमिति–संयतः साधुः श्रमणं निर्ग्रन्थादिरूपं,[1] ब्राह्मणं धिग्जातीयं,[2] कृपणं वा पिण्डोलकं,[3] वनीपकं दरिद्रमेतेषां[4] चतुर्णां मध्येऽन्यतममुपसङ्क्रामन्तं सामीप्येन गच्छन्तमागच्छन्तं वा, किमर्थं ? भक्तार्थं पानार्थं वा. १०. उक्तां योजनामग्रिमगाथयाह–तमिति–संयतः पूर्वगाथायां य उक्तस्तं श्रमणादिकं चतुर्भेदं पूर्वोक्तमतिक्रम्योल्लङ्घ्य न

समणं[5] माहणं[2] वा वि किविणं[3] वा वणीमगं[4]। उवसंकमंतं भत्तट्ठा पाणट्ठा एव संजए १०.

तमइक्कमित्तु न पविसे न वि चिट्ठे चक्खुगोअरे। एगंतमवक्कमित्ता तत्थ चिट्ठिज्ज संजए ११.

वणीमगस्स वा तस्स दायगस्सभयस्स वा। अप्पत्तिअं सिआ हुज्जा लहुत्तं पवयणस्स वा १२.

पडिसेहिए व दिन्ने वा तओ तम्मि नियत्तिए। उवसंकमिज्ज भत्तट्ठा पाणट्ठाए व संजए १३.

प्रविशेत्, नापि तेभ्यः समुदाने दीयमाने चक्षुर्गोचरे तिष्ठेत्,तर्हि किं कुर्यादित्याह–एकान्तमवक्रम्य तत्र तिष्ठेत्संयतः ११. अन्यथैते दोषा भवन्ति, तानाह–वणीति–वनीपकस्य वा तस्य, उपलक्षणत्वात्पूर्वोक्तस्य श्रमणादेश्च दातुर्वा उभयोर्वा, अप्रीतिः कदाचित्स्यात्, काप्रीतिरहो एते लौकिकव्यवहारस्याज्ञातार इत्यादिरूपा, तथा प्रवचनस्य लघुत्वं स्यात्, अन्तरायदोषोऽपि स्यात्. १२, तस्मादेवं पूर्वोक्तं न कुर्यात्तर्हि किं कुर्यादित्याह–पडिसेति–संयतः साधुः प्रतिषिद्धे वा दत्ते वा ततः स्थानात्तस्मिन् वनीपकादौ

निवर्तिते सति उपसङ्क्रमेद्भक्तार्थं पानार्थं वा ११ परपीडाधिकारात्पुनरिदमाह—उप्पलमिति—उत्पलं नीलोत्पलादि, पद्ममरविन्दं, कुमुदं वा गर्दभकं वा, मगदन्तिका मेत्तिका, मल्लिकामित्यन्ये, तथाऽन्यच्चा पुष्पं सचित्तं शाल्मलीपुष्पादि, तच्च सँल्लुञ्च्यापनीय छित्त्वा दद्यात् १४ तदा किमित्याह—तमिति—तत संयतो वदतीं प्रतीव वदेत्—हे क्षि तादृशं भक्तपानं संयताना

उप्पल पउम वा वि कुमुअं वा मगदतिअं । अन्न वा पुप्फसच्चित्त त च संलुंचिआ दए १४
त ( तारिसं ) भवे भत्तपाणं तु संजयाण अकप्पिअं । दितिअं पडिआइक्खे न मे कप्पइ तारिसं १५
उप्पल पउम वा वि कुमुअ वा मगदतिअं । अन्न वा पुप्फसच्चित्त त च सम्मद्दिआ दए १६
त भवे भत्तपाणं तु संजयाण अकप्पिअं । दितिअं पडिआइक्खे न मे कप्पइ तारिसं १७

भक्तपानो,यं ततो मे मम न कल्पते १५ पुन कीदृशं न कल्पत इत्याह—उप्पलमिति—तच्चोत्पलादिकं पूर्वोक्त समुद्य दाता दद्यात्, तत्रापि संयतो न गृह्णीयात्, सम्मर्दनं नाम पूर्वच्छिन्नानामेवापरिणतानां मर्दनम् १६ तत किमित्याह—तमिति—भक्तपानिका पूर्ववत् १७ पुन किं किं वर्जयेदित्याह—

सालुअमिति–शालूकं वा उत्पलकन्दं, विरालिकां पलाशकन्दरूपां, पर्ववल्लिप्रतिपर्वकन्दामित्यन्ये, कुमुदोत्पलनालौ प्रसिद्धौ,
तथा मृणालिकां पद्मिनीकन्दोत्थां, सर्षपनालिकां सिद्धार्थमञ्जरीं, तथा इक्षुखण्डं, एतच्छालूकादिसप्तकं किंभूतं ? अनिर्वृतं
सचित्तं, १८. पुनः किं किं तदाह–तरुणेति–वृक्षस्य चिञ्चिणिकादेर्वा, तृणस्य वा मधुरतृणादेः, अन्यस्यापि हरितस्यार्जका-
देश्च, तरुणकं वा प्रवालमामकमपरिणतं सचित्तं, संयतः पूर्वगाथोक्तं शालूरादि सप्तकं चिञ्चिणिकादित्रयस्य तरुणप्रवालं च

सालुअं वा विरालिअं कुमुअं उप्पलनालिअं । मुणालिअं सासवनालिअं उच्छुखंडं अनिव्वुडं १८.

तरुणगं वा पवालं रुक्खस्स तणगस्स वा । अन्नस्स वा वि हरिअस्स आमगं परिवज्जए १९.

तरुणिअं वा छिवाडिं आमिअं भज्जिअं सइं । दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं २०.

तहा कोलमणुस्सिन्नं वेलुअं कासवनालिअं । तिलपप्पडगं नीमं आमगं परिवज्जए २१.

सचित्तं परिवर्जयेत्, १९. पुनः संयतः किं कुर्यात्तदाह–तरुणीति—भिक्षुरेवंविधां स्त्रियं प्रतीति वदेत्, इतीति किं ? न मे
ममैतादृशं भोजनं कल्पते, किं कुर्वतीं स्त्रियं ? छिवाडि मुद्गादिफलिं, किंविशिष्टां छिवाडिं ? तरुणं वा असंजातां, तथा
पुनर्भर्जितां, पुनः किंभूताम् ? आमामसिद्धां सचेतनां सकृदेकवारं ददतीम् २०. पुनः साधुः किं वर्जयेत्तदाह–तहेति–साधुः
कोलं बदरं परिवर्जयेत्, किंभूतं कोलम् ? अस्विन्नम्, अस्विन्नमिति पदस्यार्थः सर्वत्र योज्यः, पुनस्तिलपर्पटकं पिष्टतिलमयं, तथा

नीमं नीमफलम्, एतत्सर्वमाम परिवर्जयेत्साधुः २१ पुनः किं वर्जयेत्साधुस्तदाह—तहेति—एवतत्तथैव तान्दुलं पिष्टं लोष्टमिश्रम्, तथा विकटं वा शुद्धोदकं, तथा तप्तनिर्वृतं क्वथितं, सत्शीतीभूतं तप्तानिर्वृत वा यत् त्रिदण्डोत्कालितं न जातं,[2] तथा तिलपिष्टं तिलखोष्टं,[1] तथा पूति पिण्याकं सर्षपखलम्, एतत्सा कुल्लोष्टादि पश्चकं कीदृशम्? आमकमपक्वं, तत्सर्वं परिवर्जयेत् २२ पुनः साधुः प्रार्थयेन्मनसापि न, तदेवाह—कपीति—साधुरेतदग्रे वक्ष्यमाणं मनसापि न प्रार्थयेत्, किं तदाह—कपित्थं

तहेव चाउलं पिट्ठं विअडं वा तित्तनिव्वुडं[1]। तिलपिट्ठपूइपिन्नागं[2], आमगं परिवज्जए २२,

कविट्ठं माउलिंगं च मूलगं मूलगत्तिअं। आमं असत्थपरिणयं मणसा वि न पत्थए २३

तहेव फलमंथूणि[1] बीअमंथूणि जाणिअ। विहेलगं[2] पियालं च आमगं परिवज्जए २४

समुआणं चरे भिक्खू कुलमुच्चावयं सया। नीयं कुलमइक्कम्म ऊसढं नाभिधारए २५

कपित्थफलं, मातुलिङ्गं च बीजपूरकं, मूलकं सपत्रजालकं, मूलकर्तिकां मूलकन्दचक्रम्,[2] आमामपक्वां, पुनः कीदृशीम्? अशस्त्रपरिणतां स्वकायशस्त्रादिना अविध्वस्ताम्, अनन्तकायकत्वाद्गुरुत्वस्यापनार्थमुभयं मनसापि न प्रार्थयेत् २३ पुनः साधुः किं वर्जयेत्तदाह—तहेवेति—तथैव फलमन्थून् बदरचूर्णान्,[1] बीजमन्थून् यवादिचूर्णान् ज्ञात्वा सिद्धान्तवचनात्,[2] तथा बिभीतकं बिभीतकफलं,[3] प्रियालं च प्रियालफलम्, एतत्फलमन्थुप्रमुखचतुष्टयमपि आममपरिणतं साधुर्वर्जयेत् २४ अथ गोचरणविधिमाह—

सम्बिति–साधुः समुदानं शुद्धं भैक्ष्यं समाश्रित्य चरेद्गच्छेत्, कुत्रेत्याह–कुलमुच्चावचं परं सदा अगर्हितत्वे सति, उच्चं प्रभूतधनापेक्षया प्रधानम् अवचं तुच्छधनापेक्षयाप्रधानं यथा परिपाट्येव चरेत्सदा सर्वकालं, परं नीचं कुलमतिक्रम्योल्लङ्घ्य विभवापेक्षया प्रभूततरलाभार्थमुत्सृतमृद्धिमत्कुलं नाभिधारयेन्न निषीदेन्न यायात्, कस्मात्? अभिष्वङ्गलोकलाघवात्. २५. अथ कीदृशः किं कुर्यात्साधुस्तदाह–अदीण इति–पण्डितः साधुर्वृत्तिं प्राणवर्तनमेषयेत्, परं न विषीदेदलाभे सति न विषादं कुर्यात्, किंभूतः पण्डितः? अदीनो द्रव्यदैन्यमङ्गीकृत्याम्लानवदनः. पुनः किंभूतः पण्डितः भोजनेऽमूर्छितोऽगृद्धः, पुनः किंभूतः

अदीणो वित्तिमेसिज्जा न विसिइज्ज पंडिए । अमुच्छिओ भोअणंमि मायण्णे एसणारए २६.

बहुं परघरे अत्थि विविहं खाइमसाइमं । न तत्थ पंडिओ कुप्पे इच्छा दिज्ज परो न वा २७.

पण्डितः? लाभे सति मात्राज्ञ आहारमात्रां प्रति, पुनः किंभूतः? एषणारतउद्गमोत्पादनैषणापक्षपाती. २६. तत एवं च परिभावयेत्तदाह–बहुमिति–परगृहेऽसंयतादिगृहे बहु प्रमाणतः प्रभूतमस्ति, किं तत्? खाद्यं स्वाद्यं च, किम्भूतं? विविधमनेकप्रकारम् उपलक्षणत्वादशनादिकमपि प्रभूतमस्ति, तत्सर्वं सदास्ति, परं न ददाति तदा पण्डितो न कुप्येन्न रोषं कुर्याददातुरुपरि, किन्त्वेवं चिन्तयेत्–यदीच्छा स्यात्तदा परो दद्यात्, न स्यात्तदा न दद्यात्, परमन्यत्किमपि न चिन्तयेत् कुतः? सामा-

पिकमाघात् २७ एतदेव विशेषेणाह—सयणेति—सयत शयनमासनं वस्त्रं भक्तं पानकं वाऽददतस्तत्स्वामिनो न कुप्येदवातु रुपरि न कोपं कुर्यात्, क सति? तत्स्वामिन शयनासनादौ प्रत्यक्षेऽपि च दृश्यमाने २८ इत्थियमिति—पुन किञ्च साधु स्त्रियं वा पुरुषं वा, अपिशब्दान्नपुंसकं वा, डहर तरुणं वा, महल्लकं वृद्धं वा, वाशब्दान्मध्यम वा, वन्दमानं सन्तं भद्रकोऽयमिति ज्ञात्वा न याचेत, कथं? याचने तेषां विपरिणामो भवति, यतीनामुपरि भावभङ्गो भवति, अन्नादीनामभावे

सयणासणवत्थ वा भत्त पाण व संजए। अदिंतस्स न कुप्पिज्जा पच्चक्खे वि अदीसओ २८
इत्थिअ पुरिसं वा वि डहर वा महल्लगम्। ववमाण न जाइज्जा[1] नो अण फरुसं वए २९.
जे न वंदे न से कुप्पे वंदिओ न समुक्कसे। एवमन्नेसमाणस्स[1] सामण्णमणुचिट्ठइ ३०

याचितस्यादाने न चैनं परुषं कठोरं ब्रूयात्, किं परुषं? वृथा ते वन्दनं यदि न ददासीत्यादि[1], पाठान्तर वा—वन्दमानो न याचेत, ऋद्धिप्राकरणेन, शेषं पूर्ववत् २९ जे इति—तथा पुनः किम्भूत? य साधुर्यो गृहस्थादिकोऽपि न वन्दते तदा न कुप्येत्, नावन्द्यमानस्योपरि कोप कुर्यात्, तथा केनापि राजादिना यदि वन्दितस्तदा न समुत्कर्षमुत्कर्षं कुर्यात्, एवमुक्तप्रकारद्वये नान्वेषयाणस्य भगवदाज्ञयाऽनुपालयत[1] श्रामण्यं यतित्वमनुतिष्ठत्यखण्डम् ३० अथ स्वपक्षस्तेयस्य प्रतिषेधमाह—

सियेति–स्यात्कदाचित्साधुरेकः कश्चिदत्यन्तजघन्यो लब्धमुत्कृष्टमाहारं लोभेनाहारगृद्ध्या विनिगूहते अन्तःप्रान्तादिनाहारेण तमुत्कृष्टमाहारमाच्छादयेत्. कथम् ? अहमेव भोक्ष्य इति, किमित्यत आह–मा ममेदं भोजनजातं दर्शितं सद्दीक्ष्याचार्यादिः स्वयमादद्यादात्मनैव गृह्णीयात् ३१. अस्य साधोर्दोषमाह–अत्तेति–स साधुरेवं पूर्वोक्तभोजने बहु पापकर्म करोति, किंभूतः साधुः ? 'अत्तट्ठागुरुओ' आत्मनोऽर्थ एव जघन्यो गुरुः पापप्रधानो यस्य स आत्मार्थगुरुकः, पुनः किम्भूतः स साधुः ? लुब्धः

सिआ एगइओ लद्धुं लोभेण विणिगूहइ। मामेयं दाइयं संतं दट्ठूणं सयमायए ३१.

अत्तट्ठागुरुओ लुद्धो बहुं पावं पकुव्वइ। दुत्तोसओ अ सो होइ निव्वाणं च न गच्छइ ३२.

सिआ एगइओ लद्धुं विविहं पाणभोअणं। भद्दगं भद्दगं भुच्चा विवन्नं विरसमाहरे ३३.

क्षुद्रः सन्, अयं परलोकदोष उक्तः, अथेहलोकदोषमाह–पुनर्दुस्तोषश्च भवति येन केनचिदाहारेणास्य क्षुद्रस्य तुष्टिः कर्तुं न शक्यते, अत एव हेतोः स साधुर्निर्वाणं तु मोक्षं न गच्छति, इह लोके च धृतिं न लभते, अनन्तसांसारिकत्वाद्वा मोक्षं न गच्छति. ३२. एवं च यः प्रत्यक्षमपहरति स प्रत्यक्षहर उक्तः, अधुना यः परोक्षमपहरति स परोक्षहर उच्यते–सिएति–एकः कोऽपि लुब्धः सन् स्यात्कदाचिद्विविधमनेकप्रकारं पानभोजनं, तत्र भिक्षाचर्यायां गत एव भद्रकं भद्रकं भव्यं घृतपूरादिकं

१ दट्ठ्वेति पाठान्तरम् ।

भुक्त्वा परिरेष कापि यद्विवर्णमम्लस्खलादि विरसं विगतरसं शीतोदनाद्याहरेत् ३३ किमर्थमेवं कुर्यादित्याह—जाणमिति—स लुब्ध साधुरेवं जानाति, एवं किं ? श्रमणाः शेषसाधवस्तावत्सर्वे मां जानन्तु यथार्थं मुनि साधुरायतार्थी मोक्षार्थी, पुन कीदृश ? सन्तुष्टो लाभेऽलाभे च सम सन् प्रान्तमसारं सेवते, किम्भूत मुनि ? रूक्षवृत्ति संयमवृत्ति, पुन किम्भूतः ? सुतोष्यो येन केनचिद्तोष नीयते इति ३४ एतदपि किमर्थमेवं कुर्यादित्याह—पूअणेति—एवंविध साधुर्बहतिप्रचुरं पाप प्रधान क्लेशयोगात्मसूते निर्वर्त्तयति तद्गुरुस्वादेष सम्यक्नालोचयति, ततो मायाशल्यं च भावशल्य करोति, किम्भूत साधु ?

जाण तु ता इमे समणा आययट्ठी अयं मुणी । सतुट्ठो सेवए पंत लूहवित्ती सुतोसओ ३४

पूअणट्ठा जसोकामी माणसम्माणकामए । बहु पसवई पाव मायासल्ल च कुव्वइ ३५.

सुर वा मेरग वा वि अन्न वा मज्जग रसं । ससक्ख न पिबे भिक्खू जस सारक्खमप्पणो ३६

पूजार्थं यशःकामी, एवं कुर्वतो मम स्वपक्षपरपक्षाभ्यां सामान्येन पूजा भविष्यतीति यशःकामी, अहोऽयमिति प्रवादार्थी वा, पुनः किम्भूतः साधु ? मानसंमानकामुक, मानो वन्दनाभ्युत्थानलाभनिमित्त, संमानश्च वस्त्रपात्रादिलाभनिमित्तः, तयोः कामुको वाञ्छक ? ३५. पुन प्रतिषेधान्तरमाह—सुरमिति—भिक्षु सुरादि न पिबेत्, तत्र सुरां वा पिष्टादिनिष्पन्नां, मेरकं वापि प्रसन्नाख्यम्, अन्यं वा सुराप्रायोग्यद्रव्यनिष्पन्न मद्यसम्बन्धिनं रस सीध्वादिरूपं न पिबेत् यतः कीदृक्सन् ? ससाक्षि सदा—

परित्यागे साक्षिणः केवल्यादयो यस्य तत् ससाक्षि केवलिप्रतिषिद्धमित्यर्थः, अतेन सर्वथा प्रतिषेध उक्तः सदा साक्षिभावात्, किमिति न पिबेदित्याह—स भिक्षुः किं कुर्वन् ? आत्मनो यशःसंयमं संरक्षन्, अन्ये त्वाचार्या एतत्सूत्रं ग्लानापवादविषयम-ल्पसागारिकविधानेन व्याचक्षते. ३६. सुरादिपानेऽत्रैव दोषमाह—पियेति—एको धर्मसहायरहित एकान्तस्थितो वा कोऽप्य-धर्मी पिबति, किम्भूत एकः ? चौरः, भगवता यन्न दत्तं तस्य ग्रहणादन्योपदेशयाचनाद्वा, पुनः किं कुर्वन् ? न मां कोऽपि जानातीति विभावयन्निति शेषः तस्येत्थंभूतस्य भो शिष्या यूयं दोषानिहलोकसम्बन्धिनः परलोकसम्बन्धिनश्च पश्यत ?

पियए एगओ तेणो न मे कोइ विआणइ । तस्स पस्सह दोसाइं निअडिं च सुणेह मे ३७.

वड्ढई सुंडिआ तस्स मायामोसं च भिक्खुणो । अयसो अ अनिव्वाणं सययं च असाहुआ ३८.

च पुनर्निकृतिं मायारूपां शृणुत मम कथयत इति शेषः. ३७. पुनस्तस्य किं भवति तदाह—वड्ढईति—तस्य भिक्षोः शौण्डिकात्यन्ताभिष्वङ्गरूपा वर्धते, पुनर्मायामृषावादं च माया च मृषावादश्च तस्य वर्धते, प्रत्युपलब्धस्यापलापनेदं च भवपरम्पराहेतुरनुबन्धदोषात्, तथा अयशश्च स्वपक्षपरपक्षयोर्मध्ये, तथा तस्यालाभेऽनिर्वाणमतृप्तिः दुःखं सततं वर्धते, च पुनरसाधुता वर्धते लोके व्यवहारतः चारित्रपरिणामबाधनेन परमार्थतः ३८. पुनस्तस्य किं स्यादित्याह—

निष्प्मति–स इत्यभूतो भिक्षुर्नित्योद्विग्न सदाप्रशान्त स्यात्[1] यथा स्तेनश्चौर[2], कै ? आत्मकर्मभि स्वकीयदुश्चरितै[3]; किम्भूतो भिक्षु ? दुर्मतिर्दुर्बुद्धि,[4] तादृश सन् सङ्क्लिष्टचित्तो मरणान्तेऽपि सवर चारित्र नाराधयाति सदैवाकुशलबुद्ध्या तस्य सवरबीजाभावात् ३९ पुनस्तस्य किं स्यादित्याह–आयरिए–तादृशो भिक्षुराचार्यानाराधयत्यशुद्धभावत्वात्, तथा श्रमणानपि नाराधयत्यशुद्धभावादेष, गृहस्था अप्येनं दुष्टशीलं गर्हन्ति कुत्सन्ति, किमिति येन कारणेन जानन्ति तादृश

निच्चुव्विग्गो[1] जहा तेणो[2] अत्तकम्मेहिं[3] दुम्मई[4] । तारिसो मरणते वि न आरोहेहि सवर ३९

आयरिए नाराहेइ समणे आवि तारिसो । गिहत्था वि णं गरिहंति जेण जाणंति तारिस ४०

एव तु अगुणप्पेही गुणाणं च विवज्जए । तारिसो मरणंते वि ण आराहेहि सवरं ४१

तव कुव्वइ मेहावी पणीअं वज्जए रस । मज्जप्पमायविरओ तवस्सी अइउक्कसो ४२

दुष्टशीलमिति ४० पुनस्तस्य किं स्यादित्याह–एवमिति–एवमुक्तप्रकारेणागुणप्रेक्षी अगुणान् प्रेक्षत इत्येवंशील, पुन किम्भूत ? गुणानां चाप्रमादादीनां स्वगतानामनासेवनेन परगतानां च प्रद्वेषकरणेन विवर्जकस्त्यागी, तादृश क्लिष्ट चित्तपरिणामो मरणान्तेऽपि नाराधयति सवरं चारित्रम् ४१ यतश्चैवमतस्तद्दोषपरिहारेण साधु कीदृश स्यात्तदाह– तवमिति–मेधावी मर्यादावर्ती साधुस्तप करोति, प्रणीतं स्निग्धं रस घृतादिं वर्जयति, न केवलमेतत्करोति, अपि तु मद्य

अत्युत्कर्षोऽहं तपस्वीत्युत्कर्षरहितः. ४२. एवंभूतस्य तस्य किं
विरतो भवति, किंभूतो मेधावी ? तपस्वी, पुनः किंभूत ? अत्युत्कर्षोऽहं तपस्वीत्युत्कर्षरहितः. ४२. एवंभूतस्य तस्य किं
स्यादित्याह-तस्सेति-तस्य साधोरित्थं भूतस्य यूयं कल्याणं गुणानां संपद्रूपमर्थात्संयमं पश्यत ? किंभूतं कल्याणं ? अनेकैः
साधुभिः पूजितं, कोऽर्थः ! सेवितमाचरितं, पुनः किंभूतं कल्याणं ? विपुलं विस्तीर्णं विपुलमोक्षावहत्वात्, पुनः किंभूतं
कल्याणं ! अर्थसंयुक्तं तुच्छतादिपरिहारेण निरुपमसुखरूपं. कथं ! मोक्षसाधकत्वात्, यूयं शृणुत मम कथयत इति शेषः ४३.

तस्स पस्सह कल्लाणं अणेगसाहुपूइअं । विउलं अत्थसंजुत्तं कित्तइस्सं सुणेहमे ४३.

एवं तु गुणप्पेही अगुणाणं च विवज्जए । तारिसो मरणंते वि आराहेइ संवरं ४४.

आयरिए आराहेइ समणे आवि तारिसो । गिहत्था वि णं पूयंति जेण जाणंति तारिसं ४५.

एवंविधश्च स साधुः किं करोतीत्यत आह-एवमिति-एवं तूक्तप्रकारेण स साधुस्तादृशः सन् शुद्धाचारः सन् मरणान्तेऽपि चरम-
कालेऽपि संवरं चारित्रमाराधयति सदैव कुशलबुद्धया तद्बीजपोषणात्, किंभूतः साधुः ? गुणप्रेक्षी गुणानप्रमादादीन् प्रेक्षत
इत्येवंशीलो यः स गुणप्रेक्षी, तथा पुनः किंभूतः ? अगुणानां च प्रमादादीनां स्वगतानामनासेवनेन विवर्जक-
स्त्यागी. ४४. पुनः स किं करोति तं च गृहस्थाः किं कुर्वन्तीत्याह-आयेति-तादृशो गुणवान् साधुराचार्यानाराधयति शुद्ध-

भावत्वात्, अपि पुनः श्रमणानामपि शुद्धभावत्वादेव, तथा गृहस्था अप्येनं पूजयन्ति, कथं ? येन कारणेन ते जानन्ति तादृशं शुद्धं धर्मम् ४५. पुनस्तनाधिकार एवेदमाह–तवेति–एवंविधः साधुर्देवकिल्बिषं कर्म करोति निवर्त्तयतीत्यर्थः, किम्भूतः साधुः ? तपःस्तेनः, वाक्स्तेनः, तथा रूपस्तेनश्च, यो नरः; तथाचारस्तेनः, तथा भावस्तेनश्च, तत्र तपःस्तेनो नाम यः क्षपकरूपसदृशः, केनचित्पृष्टस्त्वमसौ क्षपक इति, तदा पूजाद्यर्थमाह अहमिति, अथवा वक्ति साधवः क्षपका एव, अथवा तूष्णीमास्ते, एवं वाक्स्तेनो धर्मकथकादिसदृशरूपः कोऽपि केनचित्पृष्टस्तथैवाह, एवरूपस्तेनो राजपुत्रादिसदृशरूपः पृष्ट

तवतेणे वयतेणे रूवतेणे अ जे नरे । आयारभावतेणे अ कुव्वइ देवकिव्बिसं ४६.१

लद्धूण वि देवत्त उववन्नो देवकिव्बिसे । तत्था वि से न याणाइ किं मे किच्चा इमं फलं ४७

स्तथैवाह, एवमाचारस्तेनो विशिष्टाचारवर्तिसदृशरूपस्तथैवाह, भावस्तेनस्तु परोत्प्रेक्षितं कथञ्चित् श्रुत्वा स्वयमनुत्प्रेक्षितमपि मया तत्प्रपञ्चेनेदं चर्चितमित्याद्याह,स इत्थम्भूतः साधुर्दुष्टभावदोषात् क्रियां पालयन्नपि देवकिल्बिषं निर्वर्त्तयति ४६ पुनस्तस्य किं स्यात्तदाह–लद्धूणेति–असौ साधुर्लब्ध्वापि देवत्वं तथाविधक्रियापालनवशेनोपपन्नो देवकिल्बिषे देवकिल्बिषकाये तत्रापि सः न जानाति विशुद्धस्यावधेरभावेन, किं न जानाति तदाह–किं कृत्वा ? ममेदं फलं किल्बिषदेवत्वं जातमिति ४७ पुनरस्यैव साधोर्दोषान्तरमाह–

तत्त इति—ततोऽपि देवलोकाच्च्युत्वापि स साधुर्मानुपत्वे एलमूकतामजभाषानुकारित्वं लप्स्यते, पुनस्ततोऽपि परम्परया नरकं तिर्यग्योनिं वा लप्स्यते, तत्र च बोधिः सकलसम्पत्तिकारिणी जिनधर्मप्राप्तिः सुदुर्लभा दुरापा दुःखेन प्राप्या भविष्यतीति.४८. अथ प्रकृतस्योपसंहारमाह एअमिति–मेधावी मर्यादावर्ती साधुरेनं पूर्वोक्तं दोषं सत्यपि श्रामण्ये किल्बिषदेवत्वप्राप्तिरूपं दृष्ट्वा

तत्तो वि से चइत्ताणं लब्भिही एलमूअयं। नरगं तिरिक्खयोणिं वा बोही जत्थ सुदुल्लहा ४८.
एअं च दोसं दट्ठूणं नायपुत्तेण भासिअं। अणुमायं पि मेहावी मायामोसं विवज्जए. ४९.
सिक्खिऊण भिक्खेसणसोहिं संजयाण बुद्धाण सगासे।
तत्थ भिक्खु सुप्पणिहिइंदिए तिव्वलज्जगुणवं विहरिज्जासि त्ति बेमि. ५०.

संमत्तं पिंडेषणानामज्झयणं पंचमं।

मायामृषावादं पूर्वोक्तं विवर्जयेत्परित्यजेत्, किम्भूतं दोषम् ? आगमतो ज्ञातपुत्रेण भगवता वर्धमानस्वामिना भाषितमुक्तं, किम्भूतं मायामृषावादं ? अणुमात्रमपि स्तोकमात्रमपि, किं पुनः प्रभूतम् ? ४९. अथाध्ययनार्थमुपसंहरन्नाह—सिक्खीति– तत्र भिक्षैषणायां भिक्षुर्विहरेत्सामाचारीपालनं कुर्यात्, किं कृत्वा ? भिक्षैषणाशुद्धिं पिण्डमार्गणशुद्धिमुद्गमादिरूपां शिक्षित्वाधी-

त्य, केभ्य' सकाशादित्याह—संयतेभ्य' साधुभ्य', किंविशिष्टेभ्य' संयतेभ्य', ? बुद्धेभ्यो ज्ञाततत्त्वेभ्य', आतार्येभ्य' न द्रव्यसाधुभ्यः सकाशात्, किम्भूतो भिक्षु' ? सुप्रणिहितेन्द्रिय श्रोत्रादिभिरिन्द्रियैर्गाढं तदुपयुक्त, पुन' किम्भूतो भिक्षु' ? तीव्रलज्ज', तीव्रा छद्मानाचारकरणे यस्य स तीव्रलज्ज उत्कृष्टसंयम इत्यर्थ', पुन' किंभूतो भिक्षु ? गुणवान् पूर्वोक्तप्रकारेण साधुगुणै' सहित', ब्रवीमीति पूर्ववत् ५० इति पिण्डैषणाध्ययने द्वितीयोद्देशक' २ पिण्डैषणाध्ययनं समाप्तम् ५ नाणेति—व्याख्यात पिण्डैषणाध्ययनमधुना महाचारकथाख्यमध्ययनमारभ्यते, अस्य चाध्ययनस्यायमभिसम्बन्ध —इहेत' पूर्वाध्ययने साधोर्भिक्षावि

अथ महाचारकथाख्य षष्ठमध्ययन मारभ्यते ।

नाणदंसणसपन्न सजमे अ तवे रय । गणिमागमसंपन्न उज्जाणम्मि समोसढ १

रायाणो रायमच्चा य माहणा अदुव खत्तिआ । पुच्छंति निहुअप्पाणो कह भे आयारगोयरो २

शुद्धिरुक्ता, इह तु गोचरप्रविष्टेन सता स्वस्याचारं पृष्टेनाचारज्ञेनापि महाजनसमक्ष तत्रैव स्थाने विस्तरतो न कथयितव्यम्, अपि तूपाश्रये गुरव' कथयिष्यन्तीति वक्तव्यम्, इत्येतदुच्यते—इत्यनेन सम्बन्धेनायातमिदमध्ययनमिति तथाहि—गाथा द्वयेनोक्तिमेलनं, राजानो नरपतय', राजामात्याश्च मन्त्रिण., ब्राह्मणा' प्रसिद्धा', अदुवत्ति' तथा क्षत्रिया श्रेष्ठ्यादय' साधु मतीति पृच्छन्ति, इतीति किं ? कथं भे भवतामाचारगोचर' क्रियाकलाप' ? य प्रति त्वं स्थितोसि, किम्भूता राजादय ,

निभृतात्मानोऽसंभ्रान्ता बद्धाञ्जलय इति द्वितीयगाथाया व्याख्यानं. किम्भूतं साधुं ? नाणदंसणसम्पन्नं, ज्ञानं श्रुतज्ञानादि, दर्शनं च क्षायोपशमिकादि. ताभ्यां सम्पन्नं संयुक्तं, पुनः किम्भूतं साधुं ? संयमे पञ्चानामाश्रवाणां विरमणादौ तपसि चानशनादौ रतमासक्तं, पुनः किम्भूतं साधुम् ? उद्याने कचित्साधूनामुपभोगयोग्यस्थाने समवसृतं स्थितं धर्मदेशनार्थं वा प्रवृत्तमिति प्रथमगाथार्थः १, २. अथ स साधू राजादिभ्यः पृच्छकेभ्यः किं वदेदित्याह–तेसिमिति–स गणी साधुस्तेभ्यो राजादिभ्य आख्याति कथयति, किम्भूतः साधुः ? निभृतोऽसम्भ्रान्त उचितधर्मकथास्थित्या, किम्भूतः साधुः ? इन्द्रियनो-

तेसिं सो निहुओ दंतो सव्वभूअसुहावहो । सिक्खाए सुसमाउत्तो आयक्खइ विअक्खणो ३.

हंदि धमत्थकामाणं[2] निग्गंथाणं सुणेह[3] मे[2] । आयारगोअरं[1] भीमं सयलं दुरहिट्ठिअं[3] ४.

इन्द्रियदमनेन, पुनः किम्भूतः साधुः ? सर्वभूतसुखावहः सर्वप्राणिहित इत्यर्थः, पुनः किम्भूतः साधुः ? शिक्षया ग्रहणासेवनारूपया सुष्ठु भव्यरीत्या समायुक्तः, पुनः किम्भूतः साधुः? विचक्षणः पण्डित इति गाथात्रयार्थः ३. किं वदेदित्याह–हंदीति–हंदीत्युप(प्र)दर्शने, हे राजादयः ! यूयं धर्मार्थकामानामाचारगोचरं क्रियाकलापं मत्समीपात् शृणुत इत्युक्तिः, धर्मश्चारित्रधर्मादिस्तस्यार्थः प्रयोजनं मोक्षस्तं कामयन्ते वाञ्छन्ति विशुद्धविहितानुष्ठानकरणेनेति धर्मार्थकामा मुमुक्षवस्तेषां, किम्भूतानां धर्मार्थकामानां निर्ग्रन्थानां[2] बाह्याभ्यन्तरग्रन्थिरहितानां, किम्भूतमाचारगोचरं ? भीमं कर्मशत्रूणामपेक्षया रौद्रं, पुनः किम्भूतमा-

गारगाचरं ? मफल सपूर्ण दुरधिष्ठितं क्षुद्रसत्त्वैर्दुराभयमिति ४ इहानन्तरमूमे निर्ग्रन्थानामाचारगोचरस्य यत्कथनं तस्योप न्यास कृत, अथ तस्यैवार्थतो गुरुतामाह—नन्नेति—भो राजादय । जिनमतादन्यत्र कपिलादिमत ईदृशं यत्सर्वमुक्तमा गारगा रं यस्तु यल्लोके माणिलाके परमदुश्चरमत्यन्तदुष्कर वस्तु, विपुलस्थानभाजिन, कोऽर्थ ? विपुलस्थानं, विपुलमोक्षतुल्या संयमस्थानं, तद्भजते सेवत इत्येवंशीलो विपुलस्थानभाजी, तस्य विपुलस्थानभाजिनः साधोर्न भूतं न भविष्यति ५ पुनरेतदेव भावयन्नाह—सक्षुद्रेति—सक्षुल्लकव्यक्तानां ये गुणा वक्ष्यमाणलक्षणास्तेऽखण्डास्फुटिता कर्तव्या, कोऽर्थ ?

नन्नत्थ परिसं वुत्त जं लोए परमदुच्चर । विउलट्ठाणभाइस्स न भूअ न भविस्सइ ५

सखुड्डगविअत्ताण वाहिआण च जे गुणा । अखंडफुडिआ कायव्वा त सुणेह जहा तहा ६

दस अट्ठ य ठाणाइं जाइं बालो वरज्झइ । तत्थ अन्नयरे ठाणे निग्गथत्ताउ भस्सइ ७

सह क्षुद्रैर्द्रव्यभावबालैर्य वर्तन्ते ते सक्षुल्लका व्यक्ताश्च द्रव्यभाववृद्धा, तेषां सक्षुल्लकव्यक्तानां सबालवृद्धानामित्यर्थ, किम्भूतानां सक्षु० ? व्याधिमतां, चशब्दादव्याधिमतां च, सरोगाणामरोगाणां चेति भाव ? किम्भूता गुणाः ? अखण्डास्फुटिता, अखण्डा देशविराधनापरित्यागेन, अस्फुटिताश्च सर्वविराधनात्यागेन, तत् शृणुत यथा कर्तव्यास्तथेति ६ ते च गुणा अगु- णपरिहारेणाखण्डा अस्फुटिताश्च भवन्तीति प्रथममगुणा उच्यन्ते—दसेति—बालोऽज्ञानी यानि दशाष्टौ अष्टादश स्थानान्य

संयमस्थानानि वक्ष्यमाणलक्षणान्याश्रित्यापराध्यति, तत्सेवनयापराधं प्राप्नोति, कथमपराध्यतीत्याह—तत्रान्यतरेऽष्टादशानामसंयमस्थानानां मध्ये एकतरस्मिन्नपि स्थाने वर्तमानः प्रमादेन निर्ग्रन्थत्वान्निर्ग्रन्थभावाद्भ्रश्यति, निश्चयनयेनापैति, कः ? पूर्वोक्तो बाल इति. ७. कानि पुनस्तानि स्थानानीत्याह—वयेति—व्रतषट्कं प्राणातिपातविरमणमृषावादविरमणादत्तादानविरमणब्राह्मविरमणपरिग्रहविरमणरात्रिभोजनविरमणरूपं, तथा कायषट्कं पृथिव्यप्तेजोवायुवनस्पतित्रसकायरूपम्, अकल्पकः शिक्षकस्थापनाकल्पादिर्वक्ष्यमाणः गृहिभाजनं गृहस्थसम्बन्धिकांस्यभाजनादि प्रतीतं, पर्यङ्कः शयनी-

वयछक्कं कायछक्कं अकप्पो गिहिभायणं। पलियंगनिसज्जा य सणाणं सोहवज्जणं ८.

तात्थिमं पढमं ठाणं महावीरेण देसिअं। अहिंसा निउणा दिट्ठा सव्वभूएसु संजमो ९.

यविशेषः प्रतीतः, निषद्या च गृह एकानेकरूपा, स्नानं देशतः सर्वतश्च द्वेधा. शोभावर्जनं च विभूषापरित्यागः, वर्जनशब्दः प्रत्येकमभिसंबद्ध्यते, स्नानवर्जनमित्यादि. ८. गुणा अष्टादशस्थानेष्वखण्डास्फुटिताः कर्तव्यास्तत्र विधिमाह—तात्थिमामिति—तत्राष्टादशविधस्थानगणे व्रतषट्के वा महावीरेण भगवतेदं वक्ष्यमाणलक्षणं प्रथमं स्थानमनासेवनद्वारेण देशितं कथितं, किं तदित्याह—अहिंसा, न हिंसा अहिंसा जीवदया, इयं च सामान्यतः प्रभूतैर्दर्शितेत्यत आह, किंभूताहिंसा ? निपुणा, आधाकर्माद्यपरिभोगतः कृतकारितादिपरिहारेण सूक्ष्मा नागमद्वारेण देशिता, अपि तु दृष्टा साक्षाद्धर्मसाधनत्वेनोप-

लब्ध्वा, किमितीयमेव निपुणा इत्याह—यतोऽस्यामेव महावीरदेशितायां सर्वभूतेषु सर्वभूतविषय संयमो नान्यत्रोद्दिश्य कृतादिभोगविधानादिति ९ एतदेव स्पष्टयन्नाह—जावन्तीति—यतो हि भगवत प्रमाणा यावन्तो लोके केचन प्राणिनस्त्रसा द्वीन्द्रियादय', अथवा स्थावरा' पृथिव्यादयस्तान् जानन् रागाद्यभिभूतो व्यापादनबुद्ध्या अजानन् वा प्रमादपारतन्त्र्येण साधुस्तान् जीवान् न हन्यात्स्वयं, न चाभिघातयेदन्यैर्न च घ्नतोऽप्यन्यान् समनुजानीयादतो निपुणदृष्टेति १० नन्वहिंसैव कथं भण्येत्यत आह—सव्व इति—तस्मात्कारणान्निर्ग्रन्था साधव प्राणवध वर्जयन्ति, किंभूतं प्राणवधं ? घोरम् रौद्रं दुःखहे

जावंति लोए पाणा तसा अदुव थावरा । ते जाणमजाण वा न हणे णो विघायए १०

सव्वे जीवा वि इच्छंति जीविउं न मरिज्जिउं । तम्हा पाणिवहं घोरं निग्गंथा वज्जयंति णं ११

अप्पणट्ठा परट्ठा वा कोहा वा जइ वा भया । हिंसगं न मुसं बूआ नो वि अन्नं वयावए १२

तुत्वात्,तस्मात्कस्मात् ? यत सर्वे जीवा अपि दुःखितादिभेदभिन्ना जीवितुमिच्छन्ति,न मर्तुं कथं ? प्राणवल्लभत्वाच्चैषां सर्वथा, णमिति वाक्यालङ्कारे ११ उक्त प्रथमस्थानविधि', अथ द्वितीयस्थानविधिमाह—अप्पेति—साधुर्मृषावचनं न ब्रूयात् स्वयमात्मना, नापि मृषा अन्यं वादयेत्, एकग्रहणे तज्जातीयग्रहणादिति न्यायेनान्यान् मृषा ब्रुवतो न समनुजानीयात्, किंभूतं मृषा ? हिंसकं परपीडाकारि,सर्वमेव किमर्थं न वदेत् ? आत्मार्थमात्मनिमित्तं,कथम् ? अग्लान एव, ग्लानोऽहं ममानेन

कार्यमित्यादिरूपं,तथा परार्थं वा परनिमित्तं वा एवमेव पूर्ववत्.तथा क्रोधाद्वा त्वं दास इत्यादिरूपम्,एकग्रहणेन तज्जातीयानां ग्रहणमिति न्यायात्, मानात्, कथम् ? अबहुश्रुत एवाहं, बहुश्रुत इत्यादिरूपं, मायातो वा, कथं ? भिक्षाटनस्यालस्येन मम पादपीडा वर्तत इत्यादिरूपं,लोभाद्वा,कथं? शोभनतरस्यान्नस्य लाभे सत्यन्तप्रान्त (स्या) स्थाहारस्यैषणीयत्वेप्यनेषणीयमिदमित्यादिरूपं, यदि वा भयात्,कथं? किञ्चित्पापं कृत्वा प्रायश्चित्तभयान्न कृतं मयेति वदति,एवं हास्यादिष्वपि योजना कार्या.१२. किमित्येतदेव मृषावदनं नेत्याह—मुसेति–मृषावादो हि लोके सर्वस्मिन्नेव सर्वसाधुभिर्गर्हितो निन्दितोऽस्ति, सर्वत्र तापकारि-

मुसावाओ उ लोगम्मि सव्वसाहूहिं गरिहिओ। अविस्सासो अ भूआणं तम्हा मोसं विवज्जए १३.
चित्तमंतमचित्तं वा अप्पं वा जइ वा बहुं । दंतसोहणमित्तं वि उग्गहंसि अजाइया १४.

त्वात्प्रतिज्ञातस्यापरिपालनात्, पुनर्मृषावादादविश्वास्योऽविश्वसनीयश्च भूतानां प्राणानां मृषावादी भवेत्, यस्मादेवं तस्मात्साधुः मृषावादं विवर्जयेत्. १३. उक्तो द्वितीयस्थानविधिः, साम्प्रतं तृतीयस्थानविधिमाह–चित्तेति–साधवोऽयाचित्वा कदाचनापि न किमपि गृह्णन्ति, यतः साधूनां सर्वमवग्रहयाचने गृहस्थैर्दत्तं ग्राह्यं नान्यथा, किं तदाह–चित्तवद् द्विपदादि, अचित्तवद्वा हिरण्यादि, अल्पं वा मूल्यतः प्रमाणतश्च,यदि वा बहु मूल्यप्रमाणाभ्यामेव,किं बहुना? दन्तशोधनमात्रमपि तथाविधं तृणाद्यपि,

एतावता साधवस्तृणाद्यप्यदत्तं न गृह्णन्ति, किमन्यत्? १४ पुनस्तदेवाह—तमिति संयता तमिति तत्पूर्वोक्तं चित्तवदचित्तवद्वाऽऽत्मना स्वयं न गृह्णन्ति विरतत्वात्, नापि परं प्रति ग्राहयन्ति विरतत्वादेव, तथान्यं वा गृह्णन्तमपि स्वयमेव न समनुजानन्ति नानुमन्यन्ते १५ तृतीयस्थानविधिरुक्तः, अथ चतुर्थस्थानविधिमाह—अबंभेति—मुनयो लोके मनुष्यलोकेऽब्रह्मचर्यं प्रतीतं नाचरन्ति न सेवन्ते, किंभूतमब्रह्म? घोरं रौद्रानुष्ठानहेतुत्वात्, पुनः किंभूतमब्रह्म? प्रमादं प्रमादवत्, कथं? सर्वदा प्रमादमूलत्वात्, पुनः किंभूतमब्रह्म? दुरधिष्ठितं दुराश्रयं दुःसेव्यं विदितजिनवचनेनानन्तसंसारहेतुत्वात्, एतदेवमत एव मुनयो

त अप्पणा न गिह्णंति नो वि गिण्हावए परं। अन्नं वा गिण्हमाणं वि नाणुजाणाति संजया १५

अबंभचरिअं घोरं पमायं दुरहिट्ठिअं। नायरंति मुणी लोए भेआययणवज्जिणो १६

मूलमेयमहम्मस्स महादोससमुस्सयं। तम्हा मेहुणसंसग्गं निग्गंथा वज्जयंति णं १७

ब्रह्म न सेवन्त इत्यर्थः। किम्भूता मुनयः? भेदायतनवर्जिनः, भेदश्चारित्रभेदस्तस्यायतनं स्थानमिदमब्रह्मचर्यमेव, उक्तन्यायात्तद्वर्जिनश्चारित्रातिचारभीरव इत्यर्थः १६ अथ एतदेव निगमयति—मूलमिति—णमिति वाक्यालङ्कारे, निर्ग्रन्था साधवस्तस्मात्कारणात् मैथुनसंसर्गं मैथुनसम्बन्धं योषित आलापाद्यपि वर्जयन्ति, तस्मात्कस्मात्? यत एतदब्रह्मसेवनमधर्मस्य पापस्य मूलं बीजमिति परलोकसम्बन्ध्यपायः, पुनरेतन्महादोषसमुच्छ्रयं, महतां दोषाणां चौर्यप्रमुख्यादीनां समुच्छ्रयं

सङ्घातवदितीहलोकसम्बन्ध्यपायः, कष्टमित्युभयलोककष्टदातृत्वान्मैथुनवर्जनं युक्तं साधूनाम्. १७. चतुर्थस्थानविधिः प्रोक्तः अथ पञ्चमस्थानविधिमाह—बिडमिति—साधव एतेषां सन्निधिं न कुर्वन्ति पर्युषितं, कोऽर्थः ? रात्रौ रक्षितं न स्थापयन्ति, किं विशिष्टाः साधवः ? ज्ञातपुत्रवचोरताः, ज्ञातपुत्रः श्रीवर्धमानस्वामी, तस्य वचने निस्सङ्गताप्रतिपादनतत्परे रता आसक्ताः,केषां सन्निधिं न कुर्वन्ति तान्याह—बिडं गोमूत्रादिपकम्,उद्भेद्यं सामुद्रादि,बिडं प्रासुकमुद्भेद्यमप्रासुकमित्येवं द्विप्रकारं लवणं,तथा तैलं, सर्पिश्च घृतं,फाणितं द्रवगुडः, एतच्च लवणाद्यप्येवं द्विप्रकारमन्यच्च रात्रौ न रक्षन्तीत्यर्थः. १८. अथ सन्निधिदोषमाह—लोहेति—

विडमुब्भेइमं लोणं तिल्लं सप्पिं च फाणिअं । न ते संनिहिमिच्छंति नायपुत्तवओरया १८.

लोहस्सेसणुफासे मन्ने अन्नयरामवि । जे सिआ सन्निहिं कामे गिही पव्वइए न से १९.

जं पि वत्थं व पायं वा कंबलं पायपुंछणं । तं पि संजमलज्जट्ठा धारन्ति परिहरंति अ २०.

लोभस्य चारित्रविघ्नकारिणश्चतुर्थकषायस्यैषोऽनुस्पर्श एषोऽनुभावो यदुत सन्निधीकरणमिति, यतश्चैवमतो मन्ये मन्यन्ते प्राकृतशैल्या एकवचनम्, एवं तीर्थकरगणधरा आहुः अन्यतरां स्तोकामपि यः स्यात्, यः कदाचित्सन्निधिं कामयते सेवते कामी, अतः स भावतो गृही गृहस्थः, नासौ प्रव्रजितः, कस्मात् ? दुर्गतिनिमित्तानुष्ठानप्रवृत्तेः, सन्निधीयते नरकादिष्वात्मानेनेति सन्निधिरिति शब्दार्थात्, प्रव्रजितस्य च दुर्गतिगमनाभावादिति. १९. अत्राह—यद्येवं वस्त्रादि धारयतां साधूनां कथं न

सन्निधिरित्याह–जपीति–साधवो यदप्यागमोक्तं वस्त्रं वा चोलपट्टादि वा १, पात्रं वालाब्वादि २ कम्बलं वर्षाकल्पादि ३, पादप्रोञ्छनं रजोहरण ४ धारयन्ति पुष्टालम्बनविधानेन, परिहरन्ति च परिभुञ्जते च मूर्छारहिता', तदपि किमर्थं ? संयमलज्जार्थं संयमार्थं पात्रादि, तद्व्यतिरेकेण पुरुषमात्रेण गृहभाजने सति संयमपालनाभावात्, लज्जार्थं वस्त्रं, तद्व्यतिरेकेणाङ्गनादौ विशिष्टश्रुतपरिणत्यादिरहितस्य निर्लज्जताया उत्पत्ते , अथवा संयम एव संयमलज्जा, तदर्थं सर्वमेव वस्त्रादि धारयन्तीत्यादि २० नेति–एतदेवं ततो महर्षिणा शय्यंभवेन गणधरेण सूत्र इत्युक्त, इतीति किं ? ज्ञातपुत्रेण ज्ञात' प्रधान क्षत्रिय सिद्धार्थ',

न सो परिग्गहो वुत्तो नायपुत्तेण ताइणा । मुच्छा परिग्गहो वुत्तो इअ वुत्त महेसिणा २१

सव्वत्थुवहिणा बुद्धा संरक्खणपरिग्गहे । अवि अप्पणो वि देहमि नायरन्ति ममाइय २२

तस्य पुत्रेण वर्धमानस्वामिना नासौ निर्ममत्वेन वस्त्रधारणादिलक्षण परिग्रह उक्तोऽर्थत', कस्मात् ? बन्धहेतुत्वाभावात्, किंभूतेन ज्ञातपुत्रेण ? तायिना त्राणा, स्वपरत्राणसमर्थेन, अपि तु क परिग्रहो महावीरेणार्थत' प्रोक्त इत्याह मूर्छा परिग्रह उक्त, असत्स्वपि वस्त्रादिषु लौल्यं कृत' ? बन्धहेतुत्वात् शिष्य' आह–ननु वस्त्रादीनामभावेऽपि यदि मूर्छा तदा वस्त्रादिसद्भावे सति कथं न मूर्छा ? उच्यते, साधूनां सम्यग्बोधेन मूर्छाया बीजभूतस्याबोधस्योपघातात्, २१. सव्वेति–बुद्धा यथावद् ज्ञाततत्त्वा' साधव' संरक्षणपरिग्रहे संरक्षणाय षण्णां जीवनिकायानां परिग्रहे सत्यपि नाचरन्ति ममत्वमितियोजना, केन ? सर्वोपधिना,

सर्वत्र योग्ये क्षेत्रे काले चोपधिनागमोक्तेन वस्त्रादिना, कुतः ? ते परिग्रहे वस्त्रादिरूपे ममत्वं न कुर्वन्तीत्याह—यतस्ते भगवन्त आत्मनोऽपि देह आत्मनो धर्मकायेऽपि ममत्वमात्मीयाभिमानं विशिष्टप्रतिबन्धसङ्गतिं न कुर्वन्ति वस्तुनस्तत्त्वस्य ज्ञानात्,किंभूतेन वस्त्रादिना ? तिष्ठतु दूरे तावदन्यत्सर्वं, देहवत्परिग्रहेऽपि न ममत्वमात्मीयाभिमानं विशिष्टप्रतिबन्धसङ्गतिं न कुर्वन्ति. २२. उक्तः पञ्चमः स्थानविधिः, अधुना षष्ठस्थानविधिमाह—अहो इति—अहो इत्याश्चर्यं, तपःकर्म तपोऽनुष्ठानं सर्वतीर्थकरैर्वर्णितं देशितं, किंविशिष्टं तपःकर्म ? नित्यमपायस्याभावेन गुणवृद्धिसंभवादप्रतिपात्येव, किंविशिष्टं तप इत्याह—या च वृत्ति-

अहो निच्चं तवो कम्मं सव्वबुद्धेहिं वन्निअं । जा य लज्जासमा वित्ती एगभत्तं च भोअणं २३.

संति मे सुहुमा पाणा तसा अदुव थावरा । जाइं राओ अपासंतो कहमेसणिअं चरे २४.

र्वर्त्तनं देहपालना, किम्भूता वृत्तिः ? लज्जासमा लज्जा संयमस्तेन समा सदृशी तुल्या, संयमाविरोधिनीत्यर्थः । च पुनरेकं भक्तं भोजनमेकभक्तं द्रव्यतो भावतश्च यस्मिन् भोजने तत्तथा, तत्र द्रव्यत एकं एकसङ्ख्यानुगतं, भावत एकं कर्मबन्धस्याभावेनाद्वितीयं, तद्दिवस एव रागादिरहितस्य, अन्यथा भावत एकत्वस्याभावादिति. २३. अथ रात्रिभोजने प्राणानामतिपातसम्भवेन कर्मबन्धेन सह सद्वितीयतां दर्शयति—संतीति—इमे एते प्रत्यक्षमुपलभ्यमानस्वरूपाः प्राणिनः सन्ति जीवा वर्तन्ते, किंविशिष्टाः प्राणिनः ? सूक्ष्माः श्लक्ष्णाः, के ते ? त्रसा द्वीन्द्रियादयः, अथवा स्थावराः पृथिव्यादयः, यान् प्राणिनो रात्रौ चक्षुषा

अपश्यन् साधु कथमपणीय चरिष्यति भोक्ष्यते ? असम्भव एपणीयस्य रात्रौ, कथ ? सत्त्वानां घातात् २४ एवं रात्रिभोजने दोषं कथयित्वा ग्रहणगतं दोषमाह—उदमिति—एतान्युदकार्द्रादीनि दिवा पापभीरुश्चक्षुषा पश्यन् विवर्जयेत्, पर रात्रौ तु तत्र कथं चरति संयमस्यानुपरोधेन ? असम्भव एव शुद्धचरणस्य, कानि तान्युदकार्द्रादीनीत्याह उदकार्द्र पूर्ववत्, एक-ग्रहणेन तज्जातीयानां सस्निग्धादीनां ग्रहणं, तथा बीजसंसक्तं बीजेन संसक्तं मिश्रं तदोदनादिकमिति शेषः, अथवा बीजानि पृथग्भूतान्येव, संसक्तं चारनालाद्यपरेण मिश्रं, तथा प्राणिनः संपातिमप्रभृतयो मह्यां पृथिव्यां निपतिताः संभवन्ति तत उद

उदउल्लं बीअससत्तं पाणा निवडिया महिं । दिआ ताइं विवज्जिज्जा राओ तत्थ कह चरे २५

एअं च दोसं दट्ठूण नायपुत्तेण भासिअं । सव्वाहारं न भुंजंति निग्गंथा राइभोअणं २६

पुढविकायं न हिंसंति मणसा वयसा कायसा । तिविहेण करणजोएण संजया सुसमाहिआ २७

कार्द्रादीनि रात्रावनालोकनेन वर्जयितुमशक्यत्वेन विशेषतः साधोश्चरणाभावः २५ अथैनमधिकारं पूर्णं कुर्वन्नाह—एअमिति—निर्ग्रन्थाः साधवः सर्वाहारं चतुर्विधमप्यशनादिकमाश्रित्य रात्रिभोजनं न भुञ्जते, किं कृत्वा ? एतं पूर्वोक्तं प्राणिहिंसारूपं नस्मादन्यमात्मविराधनादिलक्षणं दोषं चक्षुषा दृष्ट्वा, किंभूतं दोषं ? ज्ञातपुत्रेण श्रीमहावीरदेवेन भगवता भाषितं कथितं २६ एवं व्रतषट्कं कथितं, अथ कायषट्कं कथ्यते, तत्र पूर्वं पृथिवीकायमाश्रित्याह—पुढवीत्ति—संयताः साधवः पृथिवीकायं

न हिंसन्त्यालेखनादिप्रकारेण, केन ? मनसा वाचा कायेन, उपलक्षणमेतदित्याह–त्रिविधेन करणयोगेन मनःप्रभृतिभिः करणकारणानुमोदनारूपेण, किंभूताः संयताः ? सुसमाहिता उद्युक्ताः. २७. अत्रैव हिंसादोषमाह–पुढेति–साधुः पृथिवीकायमालेखनादिना प्रकारेण हिंसन् तु निश्चयेन हिनस्त्येव. कानित्याह–प्राणान् द्वीन्द्रियादीन्, किंविधान् ? अनेकप्रकारान् त्रसान् चशब्दात्स्थावरानप्कायादीन्, किंभूतान् प्राणान् ? तदाश्रितान् पृथिवीसमाश्रितान्, पुनः किंभूतान् प्राणान् ? चाक्षुषान्

पुढविकायं विहिंसंतो हिंसई उ तयस्सिए । तसे अ विविहे पाणे चक्खुसे अ अचक्खुसे २८.

तम्हा एअं विआणित्ता दोसं दुग्गइवड्ढणं । पुढविकायसमारंभं जावजीवाइ वज्जए २९.

आउकायं न हिंसंति मणसा वयसा कायसा । तिविहेण करणजोएण संजया सुसमाहिआ ३०.

आउकायं विहिंसंतो हिंसई उ तयस्सिए । तसे अ विविहे पाणे चक्खुसे अ अचक्खुसे ३१.

चक्षुर्ग्राह्यान् कांश्चित्, पुनः किंभूतान् प्राणान् ? अचाक्षुषान् चक्षुरिन्द्रियेणाग्राह्यान्. २८. यस्मादेवं ततः किं साधुना कर्तव्यमित्याह–तम्हेति–यस्मादेवं तस्मात्पृथिवीकायसमारंभमालेखनादिना यावज्जीवं साधुर्वर्जयेत्, किं कृत्वा ? एतं पूर्वोक्तं दोषं विज्ञाय पृथिव्याश्रितजीवहिंसालक्षणं दूषणं ज्ञात्वा, किंभूतं दोषं ? दुर्गतिवर्धनं संसारवर्धनम्. २९. सप्तमस्थानविधिरुक्तः, अथाष्टमस्थानविधिः कथ्यते–आउकायमिति–इदं गाथात्रयं पृथिवीकायगाथात्रयं यथा पूर्वं व्याख्यातं तथा व्याख्येयं,

नवरं तत्र पृथिवीनाम्ना, अथाप्कायनाम्ना ३० ३१ ३२ साम्प्रत नवमस्थानविधिं कथयति–जायेति–साधव जाततेजसमग्निकायं मन प्रभृतिभिरपि ज्वलयितुमुत्पादयितु वृद्धिं प्रापयितुं नेच्छन्ति, किंभूत जाततेजसं ? पापक पाप एव पापकस्त, कथ ? प्रभूतजीवसंहारकारकत्वात्, पुनः किंभूतं जाततेजसं ? तीक्ष्णं छेदकरणस्वरूपमन्यतरं शस्त्रमेकधारादिशस्त्ररूपं न, किन्तु सर्वतो धारशस्त्रम्, अत एव सर्वतोऽपि दुराश्रयं सर्वतोधारत्वेनानाश्रयणीय

तम्हा एअं विआणित्ता दोसं दुग्गइवड्ढणं। आउकायसमारंभ जावजीवाइ वज्जए ३२
जायतेअं न इच्छंति पावगं जलइत्तए। तिक्खमन्नयरं सत्थं सव्वओ वि दुरासयं ३३
पाईणं पडिणं वा वि उड्ढं अणुदिसामवि। अहे दाहिणओ वा वि दहे उत्तरओ वि अ ३४
भूआणमेसमाघाओ हव्ववाहो न संसओ। तं पईवपयावट्ठा संजया किंचि नारभे ३५

मित्यर्थ ३३ एतदेव स्पष्ट कुर्वन्नाह–पाइणमिति–अग्निरिति शेष । प्राच्यां पूर्वस्यां दिशि, तथा प्रतीच्यां पश्चिमायां दिशि, ऊर्ध्वम्, 'अणुदिसामवि' सप्तम्यर्थे षष्ठी, अध इत्यधोदिशि, पुनर्दक्षिणतश्चापि, दाह्य वस्तु दहति भस्मसात्करोति, सर्वासु दिक्षु विदिक्षु च जीवसंहार करोतीत्यर्थ ३४ यत एवं तत किं कर्तव्यमित्याह–भूआणमिति–भूतानां स्थावरत्रसानामेष हव्यवाहो वह्निराघातो न संशय, एषमेव तदाघात एवेति भाव, तत कारणात्सय

तास्तं वह्नि प्रदीपार्थं प्रकाशकरणाय प्रतापनार्थं च शीतनाशाय किञ्चित्सङ्घट्टनादिनापि नारभन्ते साधुधर्मनाशनभीत्या. ३५. यस्मादेवं ततः किं कर्तव्यमित्याह–तह्मेति–पूर्ववदुक्तिलापनिका अर्थश्च कार्यः, नवरमग्निकायनाम ग्राह्यम्. ३६. इति नवमस्थानविधिः कथितः, अथ दशमस्थानविधिः कथ्यते–अणिलस्सेति–बुद्धास्तीर्थंकरा अनिलस्य वायुकायस्य समारम्भम् व्यजनादिभिः करणं तादृशमग्निकायसमारम्भसदृशं मन्यन्ते जानन्ति, तथैवं वायुकायसमारम्भं सावद्यबहुलं पापभूयिष्ठमिति

तम्हा एअं विआणित्ता दोसं दुग्गइवड्ढणं। तेउकायसमारंभं जावजीवाइ वज्जए ३६.
अणिलस्य समारंभं बुद्धा मन्नंति तारिसं। सावज्जबहुलं चेअं नेअं ताइहिं सेविअं ३७.
तालिअंटेन पत्तेण साहाविहुअणेण वा। न ते वीइउमिच्छंति वेआवेऊण वा परं ३८.
जं पि वत्थं व पायं वा कंबलं पायपुंछणं। न ते वायमुईरन्ति जयं परिहरन्ति अ ३९.

कृत्वा सर्वकालमेव न एनं तादृग्भिर्जीवरक्षाकारकैः साधुभिः सेवितमाचरितमिति मन्यन्ते बुद्धा एव. ३७. एतदेव स्पष्टीकुर्वन्नाह–तालिअमिति–ते साधवस्तालवृन्तेन पत्रेण शाखाविधूननेन वा कृत्वात्मनात्मानं वीजितुं नेच्छन्ति,नापि तालवृन्तादिभिः परैरात्मानं वीजयन्ति, नापि वीजयन्तं परमनुमन्यन्ते, तालवृन्तादीनां स्वरूपं यथा षड्जीवनिकायां व्याख्यातं तथा ज्ञेयम्. ३८. अथोपकरणाद्या विराधना भवति तां परिहरन्नाह–जंपीति–यदपि वस्त्रं वा पात्रं वा कम्बलं वा पादप्रोञ्छनं वा, एतेषां पूर्व-

व्याख्यातार्थानी यदमापकरणं, तेनापि धर्मोपकरणेन त साधवो न पातमुदीरयन्ति, कया ? अयतनया प्रतिक्रियया, किन्तु यतं परिहरन्ति परिभोगपरिहारेण धारणपरिहारेण च ३९, मत एषाय सुसाधुवर्जितोऽनिलसमारम्भ', तत' किं कार्य-

तम्हा एय विआणित्ता दोस दुग्गइवड्डण । वाउकायसमारंभ जावजीवाइ वज्जए ४०

वणस्सइं न हिंसति मणसा वयसा कायसा । तिविहेण करणजोएणं संजया सुसमाहिआ ४१

वणस्सइ विहिंसतो हिंसई अ तयस्सिए । तसे अ विविहे पाणे चक्खुसे अ अचक्खुसे ४२

तम्हा एअ विआणित्ता दोस दुग्गइवड्डण । वणस्सइसमारम जावजीवाइ वज्जए ४३

तसकाय न हिंसति मणसा वयसा कायसा । तिविहेण करणजोएण सजया सुसमाहिआ ४४

तसकाय विहिंसतो हिंसई उ तयस्सिए । तसे अ विविहे पाणे चक्खुसे अ अचक्खुसे ४५

मि'याद-तम्हति-एवमत, नवरं वायुकायनाम प्राक्षम् ४० एवमुक्तो दशमस्थानविधि', अथैकादशस्थानविधि' कथ्यते—वणस्सइमिति-एतद्गाथात्रयव्याख्यानमपि पूर्ववद् ज्ञेय, नवरं वनस्पतिनाम प्राक्षम् ४१ ४२ ४३ अथ द्वादशस्थान विधिरुच्यते-तसेति-एतद्गाथात्रयस्यापि व्याख्यान पूर्ववत् कार्य, नवर त्रसनाम प्राक्षम ४४ ४५ ४६ इत्युक्तो द्वादश

स्थानविधिः, तत्प्रतिपादनेन कायषट्कं कथितं, कायषट्ककथनेन साधूनां मूलगुणा उक्ताः, अधुना मूलगुणानां वृतिभूता ये उत्तरगुणास्तेषां प्रतिपादनावसरः—जाइमिति—ते चोत्तरगुणा अकल्पादयः षट्, तत्राकल्पो द्विविधः—शिष्यकस्थापनाकल्पोऽकल्पस्थापनाकल्पश्च, तत्र येन नवीनशिष्येण पिण्डनिर्युक्त्यादि पठितं नास्ति स आहारदोषान्न जानाति, तेनानीत आहारपिण्डो ग्रहीतुं साधूनामकल्पः, स शिष्यकस्थापनाकल्पः, अकल्पस्थापनाकल्पं तु सूत्रकार आह—यानि चत्वार्यभोज्यानि संयमस्य

तम्हा एअं विआणित्ता दोसं दुग्गइवड्ढणं। तसकायसमारंभं जावजीवाइ वज्जए ४६.

जाइं चत्तारि भुज्जाई इसिणा हारमाइणि। ताइं तु विवज्जंतो संजमं अणुपालए ४७.

पिंडं सिज्जं च वत्थं च चउत्थं पायमेव य। अकप्पिअं न इच्छिज्जा पडिगाहिज्ज कप्पिअं ४८.

जे निआगं ममायंति कीअमुद्देसिआहडं। वहं ते समणुजाणंति इअ उत्तं महेसिणा ४९.

नाशकारित्वेन साधूनामकल्पनीयान्याहारादीनि आहारशय्यावस्त्रपात्ररूपाणि, तानि तु साधुर्विवर्जयेत्, संयमं सप्तदशप्रकारमनुपालयेत्, अकल्पनीयस्याहारादिचतुष्टयस्यात्यागे संयमस्याभावो भवेत्. ४७. अथैतदेव स्पष्टं कुर्वन्नाह—पिंडमिति—साधुः पिण्डं शय्यां च वस्त्रं चतुर्थं पात्रमेव च, एतच्चतुष्टयं प्रकटार्थम् अकाल्पिकं नेच्छेत्, काल्पिकं तु यथोचितं प्रतिगृह्णीयादिति विधिः. ४८अथाकल्पिके दोषं कथयति—जे इति ये केचन द्रव्यलिङ्गिनो नियागं नित्यमामन्त्रितपिण्डं ममायंति प्रतिगृह्णन्ति, पुनः

र्गतमौद्देशिकमाहृतं च गृह्णन्ति, ते धर्मं स्थावरादिजीवघातमनुजानन्ति, दातु प्रवृत्तेरनुमोदनेन, केनेदं कथितमित्याह— इत्युक्तं महर्षिणा महामुनिना श्रीवर्धमानस्वामिना ४९ यस्मादेवं तस्मात्किं कर्तव्यमित्याह—तम्हेति—तस्मात्कारणान्निर्ग्रन्था साधवोऽशनादिकं चतुर्विधमपि सदोषं क्रीतम्, औद्देशिकम्, आहृतं च वर्जयन्ति किंभूता निर्ग्रन्थाः ? स्थितात्मानः, स्थितो निश्चलत्वेना मा धर्मे यषां ते स्थितात्मान संयमैकजीविन इत्यर्थः, उक्तोऽकल्पः, अकल्पकथनाच्च त्रयोदश स्थानविधिर

तम्हा असणपाणाइं कीअमुद्देसिआहडं । वज्जयति ठिअप्पाणो निग्गथा धम्मजीविणो ५०

कंसेसु कंसपाएसु कुंडमोएसु वा पुणो । भुंजतो असणपाणाइ आयारा परिभस्सइ ५१

सीओदगसमारंभे मत्तधोअणछड्डणे । जाइं छन्नाति भूआइ दिट्ठो तत्थ असंजमो ५२

प्युक्त ५० इदानीं चतुर्दशस्थानविधिमाह—कंसेस्विति—साधुराचारात्साधुसम्बन्धिन परिभ्रश्यति, भ्रष्टाचारो भवति, किं कुर्वन् साधु ? अशनपानादिकमन्यदोषरहितमपि भुञ्जान, केषु भाजनेषु भुञ्जान इत्याह—कांस्येषु कटोरिकादिषु, पुन कांस्यपात्रीषु तिलकादिषु, कुण्डमोदेषु हस्तिन पादाकारेषु मृन्मयादिषु भुञ्जान ५१ कथं तेषु भुञ्जानो भ्रष्टाचारो भवे-दित्याह—सीओ इति—गृहिभाजनं कांस्यादिकं, तत्र भोजने भोजनकर्तु साधो केवलिना सोऽसंयमो दृष्ट, स क ? यानि तत्र भूतान्यप्कायादीनि छिद्यन्ते हिंस्यन्ते, क ? शीतोदकसमारम्भे सचेतनेनोदकेन भाजनस्य धावनारम्भे क्षालनारम्भे, कथं ?

कांस्यादिभाजनेषु श्रमणा भोक्ष्यन्ते, अथवा श्रमणैरेषु भुक्तमिति हेतोर्भाजनक्षालनं कुर्वन्ति गृहस्थाः, पुनः कुत्र ? मात्रकधावनोज्झने, कुण्डमोदकादिषु भाजनेषु क्षालनजलत्यागेऽसंयमो भवेत्. ५२. पच्छेति–पुनः किञ्च निर्ग्रन्थाः साधव एतदर्थं पश्चात्कर्मपुरःकर्मपरिहारार्थं गृहिभाजने कांस्यादिके न भुञ्जते, कथं ? यतः पश्चात्कर्म पुरःकर्म च धर्मवतां साधूनां न कल्पते, पश्चात्कर्मपुरःकर्मभावस्तु उक्तवदित्येके. अन्ये त्वेवं व्याख्यानयन्ति–भुञ्जन्तु तावत्साधवो वयं तु पश्चोद्भोक्ष्याम इति पश्चात्कर्म, तस्माद्वि-

पच्छाकम्मं पुरेकम्मं सिआ तत्थ न कप्पइ । एअमट्ठं न भुंजंति निग्गंथा गिहिभायणे ५३.

आसंदीपलिअंकेसु मंचमासालएसु वा । अणायारिअमज्जाणं आसइत्तु सइत्तु वा ५४.

नासंदीपलिअंकेसु न निसिज्जा न पीढए । निग्गंथा पडिलेहाए बुद्धवुत्तमहिट्ठगा ५५.

परीतं तु पुरःकर्म इति. ५३. गृहिभाजनदोष उक्तः, तस्याभिधानाच्चतुर्दशस्थानविधिरप्युक्तः, साम्प्रतं पञ्चदशस्थानगतविधिमाह–आसन्दीति–आसन्दी पर्यङ्कः मञ्चश्च, एते तयोऽपि प्रसिद्धाः, आशालकस्तु सर्वाङ्गसमन्वित आसनविशेषः, एतेष्वासितुमुपवेष्टुं स्वप्तुं वा निद्रां कर्तुं वा आर्याणां साधूनामनाचरितं, कथं ? सुषिरदोषात्. ५४. अत्रैव स्थानेऽपवादमार्गमाह–नासमिति–निर्ग्रन्थाः साधवो नासन्दीपर्यङ्कयोः न निषद्यायामेकादिकल्परूपायां, न पीठके वेत्रमयादौ, चक्षुरादिना अप्रत्यु-

१ भुञ्जतामिति साधुः । २ भोक्ष्यामह इति युक्तम् ।

पञ्च निपीदनादि न कुर्वन्तीति वाक्यशेष'। किम्भूता निर्ग्रन्था'? बुद्धोक्ताधिष्ठातार', बुद्धेन तीर्थंकरेण यत्कथितम्, स्थान तत्र तत्प रा', एष चाप्रत्युपेक्षितेष्वासन्दीपर्यङ्कनिषद्यादिपीठेषु निपीदनस्य निषेधाद्धर्मकथादौ राजकुलादौ प्रत्युपेक्षितेषु निपीदनादि कुर्वन्त्यपि, अन्यथा अप्रत्युपेक्षितेष्विति विशेषणस्यावैफल्यं स्यात् ५५ अत्रैव दोषमाह–गम्भीरेति–एते आसन्दीपर्यङ्कादय' गम्भीरविजया', गम्भीरोऽप्रकाशो विजय आश्रयो येषां ते गम्भीरविजया अप्रकाशाश्रया' प्राणिनां भवन्ति, तेन प्राणिन एतेषु दुष्प्रत्युपेक्ष्या भवन्ति, पीड्यन्ते च तेषामुपवेशनादिना, तेनैतदर्थं साधुभिरासन्द्यादयो विवर्जितास्त्यक्ता' ५६

गम्भीरविजया एए पाणा दुप्पडिलेहगा। आसंदी पलिअंको अ एअमट्ठं विवज्जिआ ५६

गोअरग्गपविट्ठस्स निसिज्जा जस्स कप्पइ। इमेरिसमणायार आवज्जइ अबोहिअं ५७

विवत्ती बम्भचेरस्स पाणाण च वहे वहो। वणीमगपडिग्घाओ पडिकोहो अगारिणं ५८

उक्त पर्यङ्कस्थानविधिः, तस्य कथनेन पञ्चदशस्थानमप्युक्तं, 'अथ षोडशस्थानमुच्यते–गोअरेति–गोचराग्रप्रविष्टस्य भिक्षार्थं प्रविष्टस्य साधोर्निषद्या कल्पते, गृहे एव निषीदनं समाचरति य' साधुरिति भाव' स साधु' एवमेवंभीदृशं वक्ष्यमाणलक्षणमना चारमापद्यते प्राप्नोति किंभूतमनाचारम्? अबोधिकम्, अबोधिर्मिथ्यात्व तदेव फलं यस्य स तम् ५७ तमेवानाचारमाह–वि पत्तीति–गृहस्थगृहे निषद्याकरण एतदनाचारा इति सम्भावनया ब्रह्मचर्यस्य विपत्तिर्नाशो भवति, कुत आज्ञाखण्डनदोषात् प्रा-

णिनां च वधे वधो भवति । तथासम्बन्धादाधाकर्मादिकरणेन. तथा वनीपकप्रतिघातो भवेत् । तदाक्षेपेणादित्साभिधानादिना च पुनरगारिणः प्रतिक्रोधो भवेत् । तत्स्वजनानां निषद्यायास्तस्याश्च तथाक्षेपदर्शनेन. ५८. अगुत्तीति—तथा पुनः किं भवेत् ? साधोस्तथा निषद्याकरणेन ब्रह्मचर्यस्यागुप्तिर्भवेत्, पुनरुत्फुल्लगल्ललोचनाया अनुभूतगुणायाः स्त्रियाः सकाशाच्छङ्का भवति, ततः कुशीलवर्धनं स्थानमुक्तेन प्रकारेणासंयमवृद्धिकारकं दूरतः परिवर्जयेत्परित्यजेत्साधुः ५९. अथ सूत्रेणापवादमाह—तिन्हेति—त्रयाणामग्रे वक्ष्यमाणानां मध्येऽन्यतरस्यैकस्य यस्य गोचरप्रविष्टस्य गृहस्थगृहनिषद्या कल्पते, औचित्येन तस्य निषद्यायाः सेवने न

अगुत्ती बंभचेरस्स इत्थीओ वा वि संकणं । कुसीलवड्ढणं ठाणं दूरओ परिवज्जए ५९.

तिन्हमन्नयरागस्स निसिज्जा जस्स कप्पई । जराए अभिभूअस्स वाहिअस्स तवस्सिणो ६०.

वाहिओ वा अरोगी वा सिणाणं जो उ पत्थए । वुक्कंतो होइ आयारो जढो हवइ संजमो ६१.

दोष इति वाक्यशेषः, कथं पुनः कल्पत इत्याह—जरयाभिभूतस्यात्यन्तं वृद्धस्य, तथा व्याधितस्य रोगवतोऽत्यन्तमसमर्थस्य, तथा तपस्विनो विकृष्टक्षपकस्य, प्राय एते भिक्षाटनं न कार्यन्ते, परमात्मलब्धिकाद्यास्तु भिक्षाटनं कुर्वन्ति, तद्विषयं चैतत् सूत्रं, तत एतेषां प्रायो दोषा न सम्भवन्ति, परिहरन्ति च वनीपकप्रतिघातादीनि. ६०. उक्तो निषद्यास्थानविधिः, तस्य कथनाच्च षोडशस्थानमप्युक्तम्, अथ सप्तदशस्थानमाह—वाहीति—यस्तु साधुः स्नानमङ्गप्रक्षालनं प्रार्थयते सेवते, तेन साधुनाचारो बाह्यतपो-

रूपो प्युत्का तो भवति, कथम् ? अस्नानपरीषहस्यासहनात्, पुन' संयम' प्राणिरक्षणादिकः जड' परित्यक्तो भवति, कस्मात् ? अप्कायादिविराधनात्, किंभूत' साधु' ? व्याधितो वा व्याधिग्रस्तो वा,पुनररोगी वा रोगरहितो वा, केनापि स्नानं न कर्तव्य मित्यर्थ' ॥ ६१ ॥ प्रासुकस्नानेन कथं संयमपरित्याग इत्याह–सतीति–सन्त्येते प्रत्यक्षमुपलभ्यमाना सूक्ष्मा' श्लक्ष्णा' प्राणिनो द्वीन्द्रियादय', कासु ? घसासु सुषिरभूमिषु च, पुनर्भिलगासु तथाविधभूमिराजीषु, के ? यान् सूक्ष्मप्राणान् स्नानं कुर्वन् स्नान-

सतिमे सुहुमा पाणा घसासु भिलगासु अ । जे अ भिक्खू सिणायतो विअडेणुप्पिलावए ६२

तम्हा ते न सिणायति सीएण उसिणेण वा । जावजीव वय घोर असिणाणमहिट्ठगा ६३

सिणाण अदुवा कक्क लुद्ध पउमगाणि अ । गायस्सुव्वट्टणट्ठाए नायरन्ति कयाइ वि ६४

जलोज्झनक्रियया विकृतेन प्रासुकेन जलेनोत्प्लावयति, तथा च सति प्राणिविराधना भवेत्, ततश्च संयमपरित्यागः ६२ अथ निगमयन्नाह–तम्हेति–यस्मादेवं दोषा उक्तास्तस्मात्ते साधवो न स्नानं कुर्वन्ति, केन कृत्वा ? शीतोदकेन वा उष्णोदकेन वा, प्रासुकाप्रासुकेन वेत्यर्थः, यतस्ते साधवो यावज्जीवमाजन्म घोरम् दुरनुचरमस्नानमाश्रित्य व्रतमधिष्ठातार', अस्यैव व्रतस्य कर्तार' ६३ सिणाणमिति–स्नानं पूर्वोक्तम्, अथवा कल्कं चन्दनादि, लोध्रं गन्धद्रव्यं, पद्मकानि च कुङ्कुमकेसराणि, वश-

ब्दादन्यदप्येवंविधं गात्रस्योद्वर्तनार्थमुद्वर्तननिमित्तं कदाचिदपि यावज्जीवमेव साधवो नाचरन्ति ६४. उक्तः स्नानविधिः, तस्य कथनेन सप्तदशस्थानमप्युक्तं, सांप्रतमष्टादशं स्थानमुच्यते शोभावर्जननाम—नगिणेति—शोभायां दोषो नास्ति, यतोऽलङ्कृतश्चापि धर्ममाचरेदित्यादि वचनादिति पराभिप्रायमाशङ्क्याह—एवंविधस्य साधोर्विभूषया शोभया किं कार्यं ? न किञ्चिदित्यर्थः, किं भूतस्य साधोः ! नग्नस्य वापि कुचैलवतोऽप्युपचारनग्नस्य, निरुपचरितनग्नस्य वा जिनकल्पिकस्येति सामान्यविषयमेव सूत्रं, तथा मुण्डस्य द्रव्यतो भावतश्च, पुनर्दीर्घरोमनखवतः, कक्षादिषु दीर्घनखवतो जिनकल्पिकस्य, इतरस्य तु प्रमाण

**नगिणस्स वा वि मुंडस्स दीहरोमनहंसिणो । मेहुणाओ उवसंतस्य किं विभूसाइ कारिअं ६५.**
**विभूसावत्तिअं भिक्खू कम्मं बंधइ चिक्कणं । संसारसायरे घोरे जेणं पडइ दुरुत्तरे ६६.**
**विभूसावत्तिअं चेअं बुद्धा मन्नंति तारिसं । सावज्जं बहुलं चेअं नेयं ताईहिं सेविअं ६७.**

युक्ता एव नखा भवन्ति, पुनर्मैथुनादुपशान्तस्योपरतस्येति. ६५. इत्थं प्रयोजनस्याभावं कथयित्वापायमाह—विभूसेति—साधुस्तत्कर्म बध्नाति, किंभूतं कर्म ? विभूषाप्रत्ययं विभूषानिमित्तं, पुनः किंभूतं कर्म ? चिक्कणं दारुणं, तत्किं ? येन कर्मणा साधुः संसारसागरे भवसमुद्रे पताति, किंभूते संसारे ? घोरे रौद्रे, पुनः किंभूते संसारे ? दुरुत्तारेऽकुशलानुबन्धतोऽत्यन्तदीर्घे. ६६. एवं बाह्यविभूषायामपायमुक्त्वा सङ्कल्पविभूषायामपायमाह—विभूसेति—बुद्धास्तीर्थकरा एवंविधं चेतस्ता-

दर्स मन्यन्ते, रौद्र कर्मबन्धहेतुभूतं विभूषाक्रियासंदर्स जानन्ति, किंभूतं चेत' ? विभूषामत्यय विभूषानिमित्तं, कोऽर्थ', एवं च यदि मम विभूषा सम्पद्यत इति तत्प्रवृत्तमित्यर्थ', सावद्यबहुलं चैतदार्तध्यानेनानुगतं चेतो नेत्यम्भूतं मातृभिरात्मारामैरार्यै साधुभि' सवितमाचरितं, कुशलचित्तत्यागेपो साधूनाम् १७ उक्त' शोभावर्जनास्थानविधि', तस्याभिधानेन चाष्टादशपदम प्युक्तम्, अष्टादशपदकथनेन चोत्तरगुणा उक्ता', साम्प्रतमुक्तफलदर्शनेनोपसंहारमाह—खवंतीति—य एवंविधाः साधव आत्मानं जीवं तेन विषयोगेनाऽनुपशान्तं शमयोजनेन क्षपयन्ति, किंभूता' साधव' ? अमोहदर्शिन', अमोहं ये पश्यन्तीत्यर्थ', त एव

खवंति अप्पाणममोहदंसिणो तवे रया संजमअज्जवे गुणे। धुणंति पावाइं पुरेकडाइं नवाइं पावाइं न ते करंति ६८. सओवसंता अममा अकिंचणा सविज्जविज्जाणुगया जसंसिणो। उउप्पसन्ने विमलेव चंदिमा सिद्धिं विमाणाइं उवंति ताइणो त्ति बेमि ६९ धम्मत्थकामज्झयणं छट्ठं

विशेष्यन्ते, पुन' किम्भूता' साधव' ? तपस्यनशनादिलक्षणे रता आसक्ताः, किम्भूते तपसीत्याह—सयमार्जवगुणे संयमार्जवे गुणौ यस्य तपसस्तस्मिन् संयमऋजुभावगुणप्रधान इत्यर्थः, त एवंभूताः साधव' पापानि धुन्वन्ति कम्पयन्ति; किंभूतानि पापानि ? 'पुरेकडाइं' पुराकृतानि जन्मान्तरेषूपार्जितानि, पुनस्ते साधवो नवानि पापानि न कुर्वन्ति, तयाममत्वादिति ६८. किंच—सओवसंतेति—ताइणोऽपि त्रातार', स्वस्य परस्य चापेक्षया साधवः सिद्धिं मुक्तिं भजन्ति, तथा केऽपि साधवः शेष-

कर्मणो विमानानि सौधर्मावतंसकादीन्युपयान्ति सामीप्येन गच्छन्ति, किंविशिष्टाः साधवः ? सदोपशान्ताः सर्वकालमेव क्रोधरहिताः, पुनः किं० साधवः ? अममाः सर्वत्र ममत्वशून्याः, पुनः किं० साधवः ? अकिञ्चना हिरण्यादिद्रव्येण मिथ्यात्वादिभावेन च किञ्चनेन मुक्ताः, पुनः किं० साधवः ? स्वात्मीया विद्या स्वविद्या परलोकोपकारिणी केवलश्रुतरूपा, स्वविद्या चासौ विद्या च स्वविद्यविद्या, तया स्वविद्यविद्यया अनुगता युक्ताः, न पुनः परविद्यया इहलोकोपकारिण्या, पुनः किं० साधवः ? यशस्विनः, शुद्धेन परलोकसम्बन्धिना यशसा सहिताः, किं० साधवः ? ऋतौ प्रसन्ने परिणते शरत्का-

अथ वाक्यशुद्ध्याख्यं सप्तममध्ययनं प्रारभ्यते ।

**चउन्हं खलु भासाणं परिसंखाय पन्नवं। दुन्हं तु विणयं सिक्खे दो न भासिज्ज सव्वसो १.**

लादौ विमल इव चन्द्रमाः, चन्द्रमा इव विमला इत्येवंकल्पास्ते भावमलरहिता इत्यर्थः, ब्रवीमीति पूर्ववत्. ६९ इति दशवैकालिकसूत्रे धर्मार्थकामाख्ये षष्ठेऽध्ययने श्रीसमयसुन्दरोपाध्यायविरचिता शब्दार्थवृत्तिः समाप्ता. ६. चउन्हमिति–व्याख्यातं धर्मार्थकामकथानामकं षष्ठमध्ययनम्, अथ वाक्यशुद्धिनामकं सप्तममध्ययनं व्याख्यायते, अस्याध्ययनस्य पूर्वाध्ययनेनायं सम्बन्धः—पूर्वाध्ययन एवमुक्तं, गोचरीप्रविष्टस्य साधोः केनापि पृष्टं, त्वं स्वकीयमाचारं कथय ? तदा तेन स्वाचारं जानतापि महाजनसमक्षं विस्तरतस्तत्रैव न वक्तव्य आचारः, किन्तूपाश्रये गुरवः कथयिष्यन्तीति वक्तव्यम्, इह सप्तमेऽध्ययने

तु उपाभयगतेमापि तेन गुरुणा वचनदोषगुणाभिज्ञेन निरवद्यवचनेन कथयितव्यमित्येतदुच्यते–उक्तं च–"सावज्जणवज्जाणं वयणाणं जा न याणइ विसेसं । वोत्तुंपि तस्स न खमं किमंग पुण देसणं काउं १ ” इत्यनेन सम्बन्धेनायातमिदमध्ययन तव सूत्र, प्रज्ञावान् बुद्धिमान् साधुर्द्वाभ्यां सत्यासत्यामृषाभ्यां भाषाभ्यां विनयं शुद्धप्रयोगं शिक्षेत जानीयात्, गुरुधारणे, द्वाभ्यामेवाभ्यां, तत्र विनय इति कोऽर्थः ? विनीयतेऽनेन कर्म इति विनयस्तं विनयं, पुनर्द्वे असत्यासत्यामृषे न भाषेत सर्वशः सर्वैः प्रकारैः ? किं कृत्वा ? चतसृणां भाषाणां सत्यादीनां परिसंख्याय सर्वैः प्रकारैर्ज्ञात्वा, किं ? स्वरूपमिति शेष सद्भु-शब्दावधारणाय, भाषाचतुष्टयमेवास्ति, नान्या भाषा वर्तते १ विनयमेवाह—जेति–प्रज्ञावान् बुद्धिमान् साधुस्तां भाषां न

जा अ सच्चा अवत्तव्वा सच्चामोसा अ जा मुसा । जा अ बुद्धेहिं नाइन्ना न तं भासिज्ज पन्नवं २

असच्चमोसं सच्चं च अणवज्जमकक्कसं । समुप्पेहमसंदिद्धं गिरं भासिज्ज पन्नवं ३

भाषेत, न इत्थंभूतां वाचमुदाहरेत्, तां कामित्याह–या च सत्या भाषा सा पदार्थतत्त्वमङ्गीकृत्यावक्तव्या सावद्यत्वेनानुच्चारणीया, यथा अमुत्र स्थिता पल्लीति कौशिकनामतापसभाषावत्, "तत्सत्यमपि न ब्रूयात्परपीडाकरं वचः । तत्सत्यस्य प्रसादेन कौशिको नरकं गतः १ ” या च सत्यामृषा साप्यवक्तव्या न वक्तव्या, यथा दश दारका जाता, मृषा च भाषा सर्वैव न वक्तव्या, या च भाषा बुद्धैस्तीर्थंकरैर्गणधरैश्च नाचीर्णा, असत्यामृषा आमन्त्रण्याज्ञापन्यादिलक्षणा अविधिपूर्वकं खरादिना प्रकारेण तामपि न भाषेत, इति गाथार्थः २ यथाभूता च भाषा न वाच्या सोक्ता, अथ यथाभूता वाच्या तामाह–असच्चेति

प्रज्ञावान् बुद्धिमान्, कः ? साधुः, एवमसत्यामृषामुक्तलक्षणां गिरं भाषां भाषेत, ब्रूयात्, किंभूतां गिरम् ? सत्याम् इयं च भाषा सावद्यापि कर्कशापि भवत्यत आह, किंभूतां गिरम् ? अनवद्याम्, अवद्यं पापं तेन रहितां पुनः किंभूतां गिरम् ? अकर्कशां कठोरवचनरहितां, किं कृत्वा भाषेत ? समुत्प्रेक्ष्य स्वस्य परस्य चोपकारकारिणीति बुद्ध्या पर्यालोच्य, पुनः किंभूतां गिरम् ? असन्दिग्धां स्पष्टां तत्कालं प्रतिपत्तिहेतुम् ३. साम्प्रतं सत्यामृषाभाषाप्रतिषेधार्थमाह–एअमिति–धीरो बुद्धिमान् साधुरेतं चार्थं पूर्वं प्रतिषिद्धं सावद्यकर्कशवचनविषयं चैतज्जातीयमेतत्सदृशं प्राकृतत्वाद्यस्तु नामयति शाश्वतम्,

एअं च अट्ठमन्नं वा जं तु नामेइ सासयं । स भासं सच्चमोसं च तं पि धीरो विवज्जए ४.

वितहं पि तहामुत्तिं जं गिरं भासए नरो । तम्हा सो पुट्ठो पावेणं किं पुणं जो मुसं वए ५.

अत्र य एवं कश्चिदर्थो नामयति, कोऽर्थः ? अननुगुणं करोति, कोऽर्थः ? मोक्षमनुकूलं न करोति, स शाश्वतं मोक्षमाश्रित्य पूर्वोक्तभाषाभाषकत्वेनाधिकृतो भाषां सत्यामृषामपि पूर्वोक्ताम्, अपिशब्दात्सत्यापि या तथाभूता, तामपि भाषां विवर्जयेत्. ४. साम्प्रतं मृषाभाषायाः संरक्षणार्थमाह–वितहमिति–यो नरो वितथमसत्यं तथामूर्त्यपि कथञ्चित्तत्स्वरूपं वस्तु पुरुषनेपथ्यास्थितवनिताद्यप्यङ्गीकृत्य यां गिरं भाषते, यथेयं स्त्री आगच्छति गायति वेत्यादिरूपाम्, असावपि नरस्तस्माद्भाषणादेवंभूताद्भाषणात् पूर्वमेव भाषणाभिसन्धिकाले पापेन कर्मणा स्पृष्टो बद्धः किं पुनर्यो मृषा प्राणघातकारिणीं वाचं वदेत्, स

यक्तातिशयेन पापकर्मणा बध्यते इत्यर्थ ५. पुन कीदृशीं भाषां साधुर्न वदेदित्याह—तम्हेति-यस्मादित्थं तथाभूत्यपि यस्त्व ङ्गीकृत्य भाषमाणो बध्यते पापकर्मणा, तस्मादयं गमिष्याम एव श्व इतोऽन्यत्र, यस्माम एव श्वस्तत्तदौपधनिमित्तममुकं वा, नाऽस्माकं वसत्यादि कार्यं भविष्यत्येव, अहं चेदं लोचादि करिष्यामि नियमेन, एष वा साधुरस्माकं विश्रामणादिकं करिष्य त्यय ६, तर्हि किं कर्तव्यमित्याह—एवमिति—धीर पण्डित साधुरेवमाद्या या भाषा, आदिशब्दात्पुस्तकं ते दास्याम्येवे त्यादिग्रहणम्, वर्ष्यत्काल भविष्यत्कालविषया बहुविघ्नत्वा मुहूर्तादीनां शङ्किता किमिदमित्थमेव भविष्यत्युतान्यथेत्यनिश्चि-

तम्हा गच्छामो वक्खामो अमुगं वा णे भविस्सइ । अहं वा णं करिस्सामि एसो वा णं करिस्सइ ६

एवमाइ उ जा भासा एसकालंमि संकिआ । संपयाइअमट्ठे वा तं पि धीरो विवज्जए ७

अईअंमि अ कालंमि पच्चुप्पण्णमणागए । जमट्ठं तु न जाणिज्जा एवमेअं ति नो वए ८

तगोचरा, तथा साम्प्रतातीतार्थयोरपि या शङ्किता, साम्प्रतार्थ स्त्रीपुरुषयोरनिश्चये सत्येष पुरुष इति अतीतार्थेऽप्येवमेव बलीवर्दतत्स्त्र्यानिश्चये तदा गौरस्माभिर्दृष्ट इति याप्येवंभूता भाषा शङ्किता, तामपि विवर्जयेत्, तथाभावनिश्चयाभावेन व्यभिचारतो मृषात्वस्योपपत्तेरितो गमनादौ गृहस्थमध्ये लाघवादिप्रसङ्गात्सर्वमेव सावसरं वक्तव्यमिति रहस्यम् ७ अईअमिति—पुन किंच साधुरतीते च काले, तथा प्रत्युत्पन्ने वर्तमानेऽनागते च काले यमर्थ तु न जानीयात्सम्यगेव

मयमिति, तमर्थमङ्गीकृत्यैवमेतदिति न वदेन्न ब्रूयात्, अयमज्ञातस्यार्थस्य भाषणे निषेध उक्तः ८. अइअंमीति—साधुरतीते काले च प्रत्युत्पन्नेऽनागते यत्रार्थे शङ्का सन्देहो भवेत्तं शङ्कितमर्थमाश्रित्यैवमेतदिति निश्चयं न वदेत्, अयमपि निषेधः शङ्कितस्य भाषणे प्रतिषेधरूपः ९. तर्हि कीदृशं वचनं वदेदित्याह—अइअंमीति—साधुरतीते च काले, प्रत्युत्पन्ने वर्तमानकाले, अनागते च काले यदर्थजातं निःशङ्कितं शङ्कारहितं. निस्सन्देहं भवेत्, तुशब्दाद्यन्निष्पापं च भवेत्, तदेवमेतदिति-

अइअंमि अ कालंमि पच्चुप्पण्णमणागए । जत्थ संका भवे तं तु एवमेअं ति नो वए ९.

अइअंमि अ कालंमि पच्चुप्पण्णमणागए । निस्संकिअं भवे जं तु एवमेअं तु निद्दिसे १०.

तहेव फरुसा भासा गुरुभूओवघाइणी । सच्चा वि सा न वत्तव्वा जओ पावस्स आगमो ११.

तहेव काणं काणत्ति पंडगं पंडगत्ति वा । वाहिअं वा वि रोगित्ति तेणं चोरत्ति नो वए १२.

निर्दिशेत्, अन्ये त्वाचार्या इत्थं वदन्ति, स्तोकं स्तोकमिति परिमितया वाचा निर्दिशेत्. १०. पुनः कीदृशी भाषां न वदेदित्याह—तहेति—तथैव साधुना परुषा कठोरा भाषा भावस्नेहरहिता न वक्तव्या, पुनर्या किंभूता भाषा ? गुरुभूतोपघातिनी बहुप्राणघातकारिणी भवति, सा सर्वथा सत्यापि बाह्यार्थतया भावमंगीकृत्य यथा कश्चित्कचित्कुलपुत्रत्वेन प्रतीतस्तं प्रत्ययं दास इति न वदेत्, यतो यस्या भाषायाः सकाशात्पापस्यागमो भवेत्, पुनः कीदृशीं भाषां न वदेदित्याह—तहेवेति—साधुस्त-

थैव काणं भिक्षार्थं पुरुष प्रत्यर्यं काण इति नो वदेत्, तथा पण्डक प्रत्यर्यं पण्डको नपुंसक इति नो वदेत्, तथा व्याधिमन्तं प्रत्यर्यं रोगीति नो वदेत्, तथा स्तेन चौर प्रत्यर्यं चौर इति नो वदेत् कुत ? अप्रीतिलज्जानाशास्थिररोगवृद्धिविराधनादिदोषा अनुक्रमेण भवन्ति ११ १२ तत किं कर्तव्यमित्याह–एएणेति–प्रज्ञावान् बुद्धिमान् साधुस्तमर्थं न भाषेत, किंभूत साधु ? बुद्धिमान् आचारभावदोषज्ञ, आचारभावस्य दोषान् जानातीत्याचारभावदोषज्ञ, तमर्थं कं ? येनैतेनान्येन वा उक्तेन कथिते नार्थेन केनचित्प्रकारेण परोऽन्य उपहन्यते पीडावान् भवति १३ पुन साधु कीदृशीं भाषां न भाषेत इत्याह–तहेवेति बुद्धिमान

एएणन्नेण अट्ठेण परो जेणुवहम्मइ। आयारभावदोसन्नू न तं भासिज्ज पन्नवं १३

तहेव होले गोलित्ति साणे वा वसुलित्ति अ। दुम्मए दुहए वा वि नेवं भासिज्ज पन्नवं १४

अज्जिए पज्जिए वा वि अम्मो माउसिअत्ति अ। पिउस्सिए भायणिज्जत्ति धूए णत्तुणिअ त्ति अ १५

साधुस्तथैव तां भाषां न भाषेत, तां कामित्याह–होल १ गोल २ इति, श्वा ३ वसुल ४ इति, द्रमक ५ इति, दुर्भग इति, इह होलादिशब्दास्तत्तद्देशेषु प्रसिद्धनिष्ठुरताविवाचका अप्रीत्युत्पादकाश्च, अतस्तेषां प्रतिषेध प्रोक्त १४ इति स्त्रीपुरुषयो सामान्येन भाषणनिषेध कृत, अथ स्त्रियमाश्रित्याह–अज्जिए इति। साधुरेतानि वचनानि न वदेत्, तानि कानि तदाह–हे आर्यिके, हे प्रार्यिके, वा हे अंब, हे मातृष्वस, हे पितृष्वस, हे भागिनेयि, हे दुहित, हे नप्त्रि एतानि वचनानि स्त्रिया आमन्त्रणे

वर्तन्ते, तत्रैषां शब्दानामर्थस्त्वेवं–तत्र मातुः पितुर्वा माता सा आर्यिका, तस्या अपि माता अन्या सा प्रार्यिका, अन्येषां पदार्थः सुगम एव. १५. हल इति–पुनः किञ्च साधुः स्त्रियं प्रति नैवं होलादिशब्दैरालपेत्. कथम्? एवमालपनं कुर्वतः साधोः स्वगर्हातत्प्रद्वेषवचनलाघवादयो दोषा भवन्ति, के ते होलादिशब्दा इत्याह–पूर्वं ये उक्ताः, पुनः हले हले इत्येवमन्ने इति, तथा भट्टे स्वामिनि, गोमिनि, होले, गोले, वसुले, इति, एतान्यपि नानादेशापेक्षया स्त्रीणामामन्त्रणवचनानि गौरवकुत्सादिगर्भाणि वर्तन्ते. १६. अथैवं पूर्वोक्तप्रकारेणालपनं न कुर्यात्तर्हि कथं कुर्यादित्याह—नामेति–साधुर्नामधेयेन नाम्नैव

हले हलित्ति अन्नित्ति भट्टे सामिणि गोमिअ । होले गोले वसुलित्ति इत्थिअं नेवमालवे १६.
नामधिज्जेण णं बूआ इत्थीगुत्तेण वा पुणो । जहारिहमभिगिज्झं आलविज्ज लविज्ज वा १७.
अज्जए पज्जए वा वि बप्पो चुल्ल पिउ त्ति अ । माउला भाइणिज्ज त्ति पुत्ते णत्तुणिअ त्ति अ १८.

क्वचित्कारणे एतां स्त्रियं ब्रूयाद्यथा हे देवदत्ते इति, अथ नाम्नोऽस्मरणे गोत्रेण वा ब्रूयात् स्त्रियं, यथा हे काश्यपगोत्रे इति, परं यथायोग्यं यथार्हमभिगृह्य वयोदेशैश्वर्याद्यपेक्षया गुणदोषानालोच्य तदालपेत् लपेद्वा, इषत्सकृद्वा लपनमालपनं, लपनं वारंवारम्, अतोऽन्यथा, तत्र च या वृद्धा मध्यदेशे ईश्वरा धर्मप्रिया अन्यथोच्यते धर्मशीला इत्यादिना, अन्यथा च यथा न लोकोपघात इति. १७. उक्तः स्त्रियमधिकृत्यालपननिषेधो विधिश्च, साम्प्रतं पुरुषमधिकृत्याह—अज्जए इति । साधुरिति न

पुन इतीति ॥ ? आयक' मापकमपि, वप्पचुल्लपितेति च, तथा मातुल भागिनेयेति, पुव नप्ता इति च, इह भाषार्थ गिपामिर द्रष्टव्य', नवर पुत्रयप्प' पितृव्याभिधीयते १८ हेभविति—किश्च हे अन्न ! हे भट्ट ! हे स्वामिन् ! हे होलाहे गोला हे वसुलेति माधु पुरुष नैवमालपेदिति १९. यदि नैवमालपेत्तर्हि कथमालपेदित्याह—नामेति । व्याख्या पूर्ववत्, नवर पुरुषाभिलापनाधयाजना काया २० उक्त पुरुषमप्याभित्यालपनमतिपेधो विधिश्च, अथ ( अधुना ) पञ्चेन्द्रियतिर्यक्सम्बन्धिन

हभो हलित्ति अन्नित्ति भट्टे सामिअ गोमिअ । होल गोल वसुलि त्ति पुरिस नेवमालवे १९

नामधिज्जेण ज बूआ पुरिसगुत्तेण वा पुणो । जहारिहमाभिगिज्झ आलविज्ज लविज्ज वा २०

पचिंदिआण पाणाण एस इत्थी अय पुम । जाव ण न विजाणिज्जा ताव जाइ त्ति आलवे २१

तहेव माणुस पसु पक्खि वा वि सरीसव । थूले पमेइले वज्झे पायमित्ति अ नो वए २२

यानविधिमाह—पचिंदीति । पञ्चेन्द्रियाणां प्राणिनां गवादीनां क्वचिद् दूरदेशे स्थितानामेषा स्त्री गौरय पुमान् बलीवर्द , याव दतदित्थ न विजानीयात्ताव माग प्रभादौ प्रयाजने समुत्पन्ने सति जातिं निमित्तमाभित्यालपेत्, अस्माद्गोरूपजातात्कियद् दूरण पयमादि, अन्यथा लिङ्गव्यत्ययसम्भवान्मृषावादस्योत्पत्ति स्यात्, मात्गोपालादीनामपि विपरिणाम इत्येवमादयो दोषा भवन्ति २१ तदेवति—किश्च मानुष्यमेवोक्तपूर्व मनुष्यमार्यादिक पशुमजादिक पक्षिणं वापि हंसादिक सरीसृपमजगरादिकं

प्रतीति न वदेत्, इतीति किम् ? अयं स्थूलोऽत्यन्तमांसलो मनुष्यादिः, तथायं प्रमेदुरः प्रकर्षेण मेदःसम्पन्नः. तथायं वध्यो मारणीयः. अयं पाक्यः पाकप्रायोग्यः, केचिद्वदन्ति–पाक्यः कालप्राप्त इत्येवं वचनं न वदेत्, कथम् ? अप्रीतिव्यापत्त्याशङ्कादिदोषप्रसङ्गात्. २२ कारणे तूत्पन्न एवं वदेदित्याह—परीति । साधुः स्थूलं मनुष्यादिकं प्रतीति वदेत्, इतीति किम् ? अयं परिवूढो बलोपेतः, अयमुपचितः, अयं सञ्जातः, अयं प्रीणितः अयं महाकाय इति ब्रूयादालपेत्. २३ पुनः कीदृशीं भाषां न

परिबूढत्ति णं बूआ बूआ उवचिआत्ति अ । संजाए पीणिए वा वि महाकायत्ति आलवे २३.
तहेव गाओ दुज्झाओ दम्मा गोरहगत्ति अ । वाहिमा रहजोगित्ति नेवं भासिज्ज पन्नवं २४.
जुवं गवित्ति णं बूआ धेणुं रसदयत्ति अ । रहस्से महल्लए वा वि वए संवहणित्ति अ २५.

वदेदित्याह—तहेवेति—प्रज्ञावान् साधुर्नैवं भाषां भाषेत, एवं किमित्याह–एता गावो दोह्या दोहार्हाः, आसां गवां दोहनसमयो वर्तत इत्यर्थः, एते गोरथका कल्होडका दम्याः, तथैते वाह्याः सामान्येन ये केचित्तानाश्रित्य रथयोग्याः, कुतो न भाषेत ? उच्यते—अधिकरणलाघवादिदोषा भवन्ति, २४ प्रयोजने तु कचिदेवं भाषेत इत्याह—जुवमिति । साधुर्युवा गौरिति दम्यो-गौर्युवा इति ब्रूयात्, धेनुं गां रसदा इति ब्रूयात्, रसदा गौरिति, तथा ह्रस्वं महल्लकं वापि गोरथकं ह्रस्वं वाह्यं महल्लकं वदेत्,

संयहनमिति च रथयोग्यं सवहन धुर्यं वदेत् २५. पुन' कीदृशीं भाषां साधुर्न वदेदित्याह—तहेवेति । प्रज्ञावान् साधुरेवं भाषां न भाषेत, किं कृत्वा ? तथैव पर्वतपुयानं जलक्रीडास्थानं गत्वा, तथा पर्वतान् प्रतीतान्, तथा वनानि च, तत्र वृक्षान् महतो महाप्रमाणान्प्रेक्ष्य दृष्ट्वा २१ एव किं न भाषेतेत्याह—अलमिति । एते वृक्षा' प्रासादस्तम्भानां, तथा परिघार्गला नावां तत्र नगरद्वारे परिघ', गोपाट्टादिष्वर्गला, नौस्तु प्रसिद्धा, आसामलमेते वृक्षा , तथोदकद्रोणीनां, उदकद्रोण्योरघट्टज

तहेव गंतुमुज्जाण पव्वयाणि वणाणि अ। रुक्खा महल्ल पेहाए नेव भासिज्ज पन्नव २६

अलं पासायखंभाण तोरणाणि गिहाणि अ। फलिहग्गलनावाण अलं उदगदोणिण २७

पीढए चंगबेरे अ नंगले मइयं सिआ। जंतलट्ठी व नाभी वा गंडिआ व अलं सिआ २८

आसणं सयणं जाणं हुज्जा वा किंचुवस्सए। भूओवघाइणिं भासं नेव भासिज्ज पन्नव २९

रथारिका', एतेषां प्रासादस्तम्भादीनामेते वृक्षा योग्या इति साधुर्न वदेत् २७ पुनराह—पीढए इति । पीठकायालमेते वृक्षाः, अत्र पीठकादिशब्देषु सर्वत्र चतुर्थ्यर्थे प्रथमास्ति, परमर्थस्तु चतुर्थ्येव कार्य', तथा च चङ्गबेरं काष्ठपात्री, तस्मै अलं, तथा—लाङ्गलं हलं तस्मै, तथा मयिकाय, मयिकमुप्तबीजाच्छादनं, तथा यन्त्रयष्टये वा, तथा नाभये वा, नाभिः शकटस्याङ्गं, गण्डिकायै वा, गण्डिका सुवर्णकाराधिकरणस्थापनी, एते वृक्षा अलं समर्था एव भाषां साधुर्न भाषेत २८ पुनराह आसणमिति ।

प्रज्ञावान् साधुरेवंविधां भूतोपघातिनीं प्राणिसंहारकारिणीं भाषां न भाषेत, एवं कामित्याह—एतेषु वृक्षेष्वासनमासन्दकादि, शयनं पर्यङ्कादि, यानं युग्यादि, भवेद्वा किञ्चिदुपाश्रये वसतौ, अन्यद्वा द्वारपात्रादि, दोषाश्चात्र तद्वनस्वामी व्यन्तरादिर्वा कुप्येत्, सलक्षणो वा वृक्ष इति गृह्णीयात्, अनियमितभाषिणो लाघवं चेत्यादयः २९. अत्रैव विधिमाह—तहेवेति—वस्तुतः पूर्ववदेव, नवरं महतो वृक्षान् वीक्ष्य प्रज्ञावान् साधुरेवं भाषेत. ३०. एवं किमित्याह—जाइमन्ता इति—साधुरिति वदेत्, इतीति किम् ? एते वृक्षा जातिमन्त उत्तमजातीया अशोकादयोऽनेकप्रकारा वा उपलभ्यमानस्वरूपाः, पुनः दीर्घा नालिकेरी-

तहेव गंतुमुज्जाणं पव्वयाणि वणाणि अ । रुक्खा महल्ल पेहाए एवं भासिज्ज पन्नवं ३०.

जाइमंता इमे रुक्खा दीहवट्टा महालया । पयायसाला विडिमा वए दरिसणित्ति अ ३१.

तहा फलाइं पक्काइं पायखज्जाइं नो वए । वेलोइयाइं टालाइं वेहिमाइत्ति नो वए ३२.

प्रभृतयः, पुनर्वृत्ता नन्दिवृक्षादयः, पुनर्महालया वटादयः, पुनरेते प्रजातशाखा उत्पन्नडाला विटपिनः प्रशाखावन्तः, पुनरेते दर्शनीया इति वदेत्, एवमपि कदा वदेत् ? प्रयोजने विश्रमणतदासन्नमार्गकथनादावुत्पन्ने सति, अन्यदा नेति. ३१. पुनः किं न वदेदित्याह—तहेति—साधुरिति नो वदेत्, इतीति किं ? तथा फलान्याम्रादीनि पाकप्राप्तानि जातानि, तथा पाक-

१ दृष्ट्वेति पाठान्तरम् ।

खाद्यानि बद्धास्थीनि गर्ताप्रक्षेपकोद्रवपलालादिना विपाच्य भक्षणयोग्यानीति, तथा वेलोचितानि पाकातिशयतो ग्रहण कालोचितानि, अत परं कालं न विषहन्त इत्यर्थः, तथा टालान्यबद्धास्थीनि कोमलानीति, तथा द्वैधिकानीति पेशीसम्पादनेन द्वैधीभावकरणयोग्यानि वेति नो वदेत्, दोषाः पुनरत्रैते—ऊर्ध्वं च नाश एवामीषां न शोभनानि वा प्रकारान्तरभाषणेऽस्यवधार्य गृहिप्रवृत्त्याधिकरणादय इति ३२ प्रयोजने पुनर्मार्गदर्शनादावेवं वदेदित्याह—असंथडेति—असमर्था एते आम्रा अति भारेण नवा न शक्नुवन्ति फलानि धारयितुमित्यर्थः, आम्रग्रहणं प्रधानवृक्षाणामुपलक्षणम्, एतेन पकार्थ उक्तः, तथा बहूनि

असयडा इमे अंबा बहुनिव्वडिमा फला । वइज्ज बहु समूआ भूअरूव त्ति वा पुणो ३३

तहेवोसहिओ पक्काओ नीलिआओ छवीइ अ । लाइमा भज्जिमाउत्ति पिहुखज्जत्ति नो वए ३४

निर्वर्तितानि बद्धास्थीनि फलानि येषु ते तथा, अनेन पाकखाद्यार्थ उक्तः, वदेद्बहुसंभूता, बहूनि संभूतानि रूपाणि पाका तिशयतो ग्रहणकालोचितानि फलानि येषु ते तथाविधाः, अनेन वेलोचितार्थ उक्तः, तथा भूतरूपा इति वा पुनर्वदेत्, भूतानि प्रकारेणाबद्धास्थीनि कोमलफलरूपाणि येषु ते तथा, अनेन टालार्थ उपलक्षित इति ३३ पुनराह—तहेति—तथैव तेनैव प्रकारेणौषधयः शाल्यादिलक्षणाः पक्का इति नो वदेत्, तथा नीलाश्छवय इति वल्लचवलकादिफललक्षणाः, तथा लवनवत्यो लवनयोग्याः, भर्जनवत्य इति भर्जनयोग्याः, तथा पृथुकभक्ष्या इति नो वदेत्, पृथुकभक्षणयोग्या इति नो वदेदिति एवं सर्वत्र

संबद्धयते, पृथुका अर्धपक्वशाल्यादिषु क्रियन्ते, अभिधानदोषाः पूर्ववत्. ३४. प्रयोजने पुनर्मार्गदर्शनादावेवमालपेदित्याह—रूढा इति—साधुरेवमालपेत्, एवं किमित्याह—रूढाः प्रादुर्भूताः, बहुसंभूता निष्पन्नप्रायाः, स्थिरा निष्पन्नाः. उत्सृता इति वा उपघातेभ्यो निर्गता इति वा, तथा गर्भिता अनिर्गतशीर्षकाः, प्रसूता निर्गतशीर्षकाः, संसाराः सञ्जाततन्दुलादिसारा इत्येवमालपेत्, पक्वाद्यर्थयोजना स्वधिया कार्या. ३५. वाग्विधिप्रतिषेधाधिकारेऽनुवर्तमान इदमपरमाह—तहेवेति—साधुः सङ्खडिं ज्ञात्वा, एषा पित्रादिनिमित्तं करणीया एवेति नो वदेत्, मिथ्यात्वस्योपबृंहणादोषात्, ननु सङ्खडीति कः शब्दार्थः ? उच्यते

रूढा बहुसंभूआ थिरा ओसढा वि अ। गभिआओ पसूआओ संसाराउत्ति आलवे ३५.
तहेव संखडिं नच्चा किच्चं कज्जंति नो वए। तेणगं वा वि वज्झित्ति सुतित्थित्ति अ आवगा ३६.
संखडिं संखडिं बूआ पणिअट्ठत्ति तेणगं। बहुसमाणि तित्थाणि आवगाणं विआगरे ३७.

संखण्डयन्ते प्राणिनामायूंषि यस्यां प्रकरणक्रियायां सा सङ्खडी, तथा स्तेनकं चौरं ज्ञात्वायं वध्य इति नो वदेत्, तदनुमतेस्तेननिश्चयादिदोषप्रसङ्गात्, तथापगा नद्यः सुतीर्थाः, चशब्दाद् दुस्तीर्णा एता इति केनापि पृष्टः सन्नो वदेत्, अधिकरणविघातादिदोषप्रसङ्गात्. ३६. प्रयोजन उत्पन्ने सति पुनः साधुरेवं वदेदित्याह—सङ्खडिमिति—साधुः सङ्खडिमिति ब्रूयात् साधुकथनादौ सङ्कीर्णा सङ्खडीत्येवमादि, पणितार्थ इति तथा स्तेनकं वदेच्छैक्षकादिकर्मविपाकदर्शनादौ, पणितेनार्थोऽस्येति पणि-

तार्थः, प्राणघृतमयोजनं इत्यर्थः, तथा बहु समानि तीर्थान्यापगानां नदीनामिति व्यागृणीयात्, साध्वादिविषय इति ३७ वाग्विधिप्रतिषेधाधिकार एवेदमाह—तहेति—साधुरिति नो वदेत्, इतीति किं ? नद्यः पूर्णा भृताः, कथ ? प्रवृत्तमक्षणनिर्वचना दिदोषात्, तथा कायतरणीयाः शरीरतरणयोग्या इत्येवं नो वदेत्, साधुवचनेन नो विघ्न इति प्रवर्तनादिप्रसङ्गात्, तथा नौभि-र्द्रोणीभिस्तरणीयास्तरणयोग्या इत्येवं नो वदेत्,अन्यथाविघ्नशङ्कया तत्प्रवर्तनात् तथा प्राणिपेया इति नो वदेत्, अन्यथा प्रवर्तना दिदोषादिति ३८ प्रयोजने साधुर्मार्गकथनादावेवं भाषेतेत्याह—बहिति—प्रज्ञावान् साधुरेवं भाषेत वक्ष्यमाण, परं न तु तदागत

तहा नइउ पुन्नाउँ कायतिज्जत्ति नो वए । नावाहिं तारिमाउत्ति पाणिपिज्ज त्ति नो वए ३८

बहुवाहडा अगाहा बहुसलिलुप्पिलोदगा । बहुवित्थडोदगाआवि एव भासिज्ज पन्नव ३९

तहेव सावज्ज जोग परस्सट्ठा अ निट्ठिअ । कीरमाण ति वा नच्चा सावज्ज न लवे मुणी ४०

पृष्टोऽहं न जानामीति ब्रूयात्,कथं मत्स्यसमुपाघादित्वेन तत्क्षेपादिदोषप्रसङ्गात्, एवं किमित्याह-बहुधा भृताःप्रायसो भृता इत्यर्थः तथा अगाधा इति बहगाधाः प्रायो गम्भीराः, बहुसलिलोत्पीलोदकाः प्रतिस्रोतोवाहितापरसरित इत्यर्थः, तथा बहुधा विस्ती र्णोदकाश्च स्वतीरप्लावनप्रवृत्तजलाश्चेति ३९ वाग्विधिप्रतिषेधाधिकार एवेदमाह—तहेवेति—तथैव मुनिः साधुः सावद्य योगं सपाप व्यापारमधिकरणसभादिविषयं परस्यार्थाय परनिमित्तं निष्ठित निष्पन्नं न ब्रूयात् तथा क्रियमाणं, वाशब्दाद्भविष्य

त्कालभाविनं वा ज्ञात्वा सावद्यं नालपेत्सपापं न ब्रूयात्. ४०. तत्र निष्ठितं नैवं वदे ( ब्रूया ) दित्याह–सुकडित्ति–मुनिः साधुरिति सावद्यं सपापमिति वक्ष्यमाणप्रकारेण वर्जयेत्, इतीति किं ? तदाह–सुकृतमिति सुष्ठु कृतं सभादि. सुपक्कंति सुष्ठु पक्कं सहस्रपाकादि, सुच्छिन्नत्ति सुष्ठु छिन्नं वनादि, सुहडित्ति सुष्ठु हृतं क्षुद्रस्य वित्तं, मडेति सुष्ठु मृतः प्रत्यनीक इति, अत्रापि सुशब्दोऽनुवर्तते, सुनिट्ठिअत्ति सुष्ठु निष्ठितं वित्ताभिमानिनो वित्तं, सुलट्ठत्ति सुष्ठु सुन्दरा कन्येत्येवं सावद्यमालपनं वर्जयेन्मुनिः,

सुकडित्ति सुपक्कित्ति सुच्छिन्ने सुहडे मडे। सुनिट्ठिए सुलट्ठित्ति सावज्जं
वज्जए मुणी ४१. पयत्तपक्कत्ति व पक्कमालवे पयत्तच्छिन्नत्ति व छिन्नमालवे।
पयत्तलट्ठित्ति व कम्महेउअं पहारगाढत्ति व गाढमालवे ४२.

अनुमत्यादिदोषप्रसङ्गात्, निरवद्यं निष्पापं तु वदेत्, इदमेव पद्यमर्थान्तरेण व्याख्यानयति–सुकडित्ति सुष्ठु कृतं वैयावृत्यमनेन, सुपक्कत्ति सुपक्वं ब्रह्मचर्यं साधोः, सुछिन्नमिति सुष्ठु छिन्नं स्नेहबन्धनमनेन, सुहृतमिति सुष्ठु हृतं शिष्यकोपकरणमुपसर्गे, सुमृतमिति सुष्ठु मृतः पण्डितमरणेन साधुरिति, अत्र सुशब्दोऽनुवर्तते, सुनिष्ठितं कर्म अप्रमत्तसंयतस्य, सुलट्ठित्ति सुन्दरा साधुक्रिया इत्येवमादिरिति. ४१. उक्तानुक्तविधिमाह–पयत्तेति–साधुग्लानप्रयोजने प्रयत्नपक्कमिति वा प्रयत्नपक्कमेतत्, पक्कं

१ गौरादित्वान्ङीपि सुन्दरीति साधीयान् पाठः। २ सुन्दरीति पूर्ववत्।

महत्प्रासादि एवमालपेत् तथा प्रयत्नछिन्नमिति वा प्रयत्नछिन्नमेतद्वनादि, साधुनिर्वेदनादावेवमालपेत्, तथा पयत्तलट्ठिति वा प्रयत्नसुन्दरा कन्या दीक्षिता सती सम्यक्पालनीयेति, कर्महेतुकमिति सर्वमेव कृतादिकर्मनिमित्तमालपेदिति योग, गाढप्रहारमिति वा कञ्चन गाढमालपेत् गाढप्रहारं ब्रूयात्कश्चित्प्रयोजने, एवं हि तदप्रीत्यादयो दोषा परिहृता भवन्तीति ४२ क्रयविक्रयव्यवहारे प्रक्रान्ते पृष्टोऽपृष्टो वा नैव वदेदित्याह—सव्वुक्कसमिति—साधुरेवं वक्ष्यमाणं नो वदेत्, एवं किमित्याह—एतत्सर्वोत्कृष्टं स्वभावेन सुन्दरमित्यर्थ, परार्घं वा उत्तमार्घं वा महार्घं क्रीतमित्यर्थ, अतुलं नास्तीदृगन्यत्रापि कचित्,

सव्वुक्कसं परग्घं वा अउलं नत्थि एरिसं । अविक्किअमवत्तव्वं अचिअत्तं चेव नो वए ४३

सव्वमेअं वइस्सामि सव्वमेअंति नो वए । अणुवीइ सव्वं सव्वत्थ एवं भासिज्ज पन्नवं ४४

अविक्किअमिति असंस्कृतं सुलभमीदृशमन्यत्रापि, अवक्तव्यमित्यनन्तगुणमेतदेवं अचिअत्तं वा अप्रीतिकरं चेतत्, इत्येवं नो वदेत् साधु, अधिकरणान्तरायादिदोषप्रसङ्गादिति ४३ सव्वमिति पुन किञ्च सर्वमेतद्वक्ष्यामीति केनचित्कस्यचित्सन्दिष्टे सर्वमेतत्त्वया वक्तव्यमिति सर्वमेतद्वक्ष्यामीति साधुर्ना वदेत्, सर्वस्य तथा स्वरव्यञ्जनाद्युपेतस्य वक्तुमशक्यत्वात्, तथा सर्वमेतदिति नो वदेत्, कस्यचित्सन्देशं प्रयच्छन् सर्वमेतदित्येवं वक्तव्यमिति नो वदेत्, सर्वस्य तथास्वरव्यञ्जनाद्युपेतस्य वक्तुम

१ प्रयोगनियमान्मीति सु टीकीति पाठः ।

शक्यत्वात्, असम्भवाभिधाने मृषावादादयो यतश्च दोषा भवन्ति, एवमतोऽनुचिन्त्यालोच्य सर्वं वाच्यं, सर्वेषु कार्येषु, यथासम्भवाद्यभिधानादिना मृषावादो न भवत्येवम् ४४. सुक्कीअमिति–किञ्च साधुरेवं न व्यागृणीयात्, एवमिति किं ? यदाह–'सुक्कीअमिति' केनचित्किञ्चित्क्रीतं दर्शितं सत्सुक्रीतमिति योगः, तथा 'सुविक्कीअमिति.' किञ्चित्केनचिद्विक्रीतं दृष्ट्वा पृष्टः सन् सुविक्रीतमिति न व्यागृणीयात्, तथा केनचित्क्रीते पृष्टेऽक्रेयं क्रयार्हमेव वा न भवतीति न व्यागृणीयात्, तथैवमेव क्रेयमेव वा क्रयार्हमिति तथेदं गुडादि गृहाण ? आगामिनि काले महार्घं भविष्यतीति, तथेदं मुञ्च

सुक्कीअं वा सुविक्कीअं अकिज्जं किज्जमेव वा। इमं गिण्ह इमं मुंच पणीअं नो विआगरे ४५.
अप्पग्घे वा महग्घे वा कए वा विक्कएवि वा। पणिअट्ठे समुप्पन्ने अणवज्जं विआगरे ४६.
तहेवासंजयं धीरो आस एहि करेहि वा। सयं चिट्ठ वयाहित्ति नेवं भासिज्ज पन्नवं ४७.

घृतादि ? आगामिनि काले समर्घं भविष्यतीति, पणितं पण्यं क्रयाणकं, नैवं व्यागृणीयात्, अप्रीत्यधिकरणादिदोषप्रसङ्गादिति. ४५. अत्रैव विधिमाह–अप्पग्घ इति–अल्पार्घे वा महार्घे वा, कस्मिन्नित्याह–क्रये वा विक्रये वापि, पणितार्थे वा पण्यवस्तुनि समुत्पन्ने केनचित्पृष्टः सन् साधुरनवद्यमपापं व्यागृणीयात्. यथा नाधिकारस्तपस्विनां व्यापारस्याभावादिति. ४६. तहेवेति–पुनः किञ्च प्रज्ञावान् बुद्धिमान धीरः पण्डितो, यतिरसंयतं गृहस्थं प्रतीति न भाषेत,

इतीति किं ? त्वमिदं गामारोहेति, त्वमेकाग्र, त्वमिदं सञ्चयादि कुरु, तथा निवृत्या त्वं शेष्व, तथा श्रमत तिष्ठाध्वस्थानन, तथा त्व प्रन ग्रामममिति ४७ बहव इति-पुन किंच लोके प्राणिलोके प्राणिसङ्घात एते बहव उपलभ्यमानस्वरूपा आजो गराद्या मोक्षसाधनयोगमाश्रित्य साधव उच्यन्ते सामान्येन, परमसाधुं साधुं नालपेत्, मृषावादप्रसङ्गात्, अति तु साधुं मनि साधुमालपेत, न तु तमपि नालपेत, उपबृंहणा प्रशंसा गुणानां तस्या अकरणेऽतिचारदोष स्यात् ४८ किंविशिष्टं

यहवे इमे असाहू लोए वुच्चति साहुणो। न लवे असाहु साहु त्ति साहु साहुत्ति आलवे ४८

नाणदंसणसपन्न सजमे अ तवे रय। एव गुणसमाउत्त सजय साहुमालवे ४९

देवाण मणुआण च तिरिआण च वुग्गहे। अमुगाण जओ होउ मा वा होउ त्ति नो वए ५०

साधुं साधुमालपेदित्याह-नाणेति-सूत्रम् संयतं साधुमालपेत्, किंभूत संयतं ? ज्ञानदर्शनसम्पन्न, ज्ञानदर्शनाभ्यां सम्पूर्ण समृद्धं, पुन किंभूतं संयतं ? संयमे सप्तदशभेदे च पुनस्तपसि द्वादशभेदे रत यथाशक्ति तत्परम्, एवं प्रकारकगुणसमायुक्त न तु द्रव्यलिङ्गधारिणम ४९. देवाणमिति-किंच साधुरिति नो वदेत्, इतीति किं ? अमुकानां देवानां जयो भवतु वा मा भवत्विति नो वदेत, कथम् ? अधिकरणतत्स्वाम्यादिदोषप्रसङ्गात्, क सति ? देवानां देवासुराणां मनुजानां च नरेन्द्रादीनां,

तिरश्चां च महिषादीनां विग्रहे सङ्ग्रामे सति. ५०. वाओ इति.–पुनः किञ्च घर्मादिनाभिभूतो यतिरेवं नो वदेत्, अधिकरणादिदोषप्रसङ्गात्, वातादिषु सत्सु सत्वपीडाप्राप्तेः, तद्वचनतस्तथाभवनेऽप्यार्तध्यानभावादित्येवं नो वदेत्, ताकि ? वातो मलयमारुतादिः,[1] वृष्टं वा वर्षणं, शीतोष्णं प्रतीतं, क्षेमं राजविड्वरशून्यं,[2] पुनर्ध्रातं सुभिक्षं, शिवमिति वा उपसर्गरहितं कदा नु भवेयुरेतानि वातादीनि, मा वा भवेयुरिति. ५१. किं नो वदेदित्याह–तहेवेति–साधुस्तथैव मेघं[1] वा नभो वाकाशं

वाओ[1] वुट्ठं च सीउन्हं खेमं[2] धायं सिवंति वा । कया णु हुज्ज एआणि मा वा
होउ त्ति नो वए[1] ५१. तहेव मेहं[1] व नहं व माणवं न देवदेव त्ति गिरं
वइज्जा[2] । समुच्छिए उन्नए वा पओए वइज्ज वा वुट्ट बलाहय त्ति ५२.

मानव वाश्रित्य नो देवदेव इति गिरं वदेत्, मेघमुन्नतं दृष्ट्वोन्नतो देव इति नो वदेत्, एवं नभ आकाशं मानवं राजानं दृष्ट्वा देव इति नो वदेत्,[1] कथं ? मिथ्यालाघवादिप्रसङ्गात्, कथं तर्हि वदेदित्याह–मेघमुन्नतं वीक्ष्य संमूर्च्छित उन्नतो वा

१ दृष्ट्वेति क० पु० ।

पयोद इति वदेत्, अथवा वृष्टो बलाहक इति वदेत्, ५२ पुनराकाशमाश्रित्याह—अतलिक्खेति—साधुरिह नभोन्तरिक्षमिति ब्रूयात्, गुह्यानुचरितमिति वा, सुरसेवितमित्यर्थः, एष किल मेघोऽपि तदुभयशब्दवाच्य एव, तथा ऋद्धिमन्तं सम्पदा सहित नरं दृष्ट्वा, किमित्याह—ऋद्धिमन्तमिति ऋद्धिमानयमित्येवमालपेत्, कथं व्यवहारतो मृषावादादिपरिहारार्थम् ५३ तहेवेति—पुनः किंच मानवः पुमान् सावद्यसमन्वेतं गिरं न वदेत् कस्मात् ? प्रभूतकर्महेतुत्वात्, एवं कामित्याह—तथैव पूर्वोक्तप्रकारेण

अतलिक्खत्ति ण बूआ गुज्झाणुचरिअत्ति अ । रिद्धिमत नर दिस्स रिद्धिमत ति आलवे ५३

तहेव सावज्जणुमोअणी गिरा ओहारिणी जा य परोवघाइणी ।
से कोह लोह भय हास माणवो न हासमाणो वि गिर वइज्जा ५४
सुवक्कसुद्धिं समुपेहिआ मुणी गिरं च दुट्ठ परिवज्जए सया ।
मिअ अदुट्ठ अणुवीइ भासए सयाणमज्झे लहई पससणं ५५

सुष्ठु हतो ग्राम इति सावद्यानुमोदिनी गीर्वाणी भाषा, तां नो वदेत्, तथेत्थमेवेत्यसंशयकारिण्यवधारिणी भाषा, तामपि नो वदेत्, पुनर्या च परोपघातिनी, यथा मांसं न दोषाय, से इति तामेवम्भूतामपि नो वदेत्, कस्मान्मानव एवम्भूतां सपापां भाषां वदतीत्याह—क्रोधाद्वा लोभाद्वा भयाद्वा, उपलक्षणत्वात्प्रमादादेर्वा ५४ अथ वचनशुद्धिफलमाह—सुवक्केति—मुनिर्दुष्टां

वाक्यशुद्धिं वा संप्रेक्ष्य सम्यग्दृष्ट्वा

गिरं परिवर्जयेत्, किं कृत्वा ? स्ववाक्यशुद्धिं स्वकीयवाक्यशुद्धिं सद्वाक्यशुद्धिं शोभनां वाक्यशुद्धिं वा संप्रेक्ष्य सम्यग्दृष्ट्वा भाषमाणः सदा सर्वदा, तर्हि कीदृशीं वदेदित्याह–मितं स्वरतः परिणामतश्चादुष्टं देशकालोपपन्नादि विचिन्त्य पर्यालोच्य भाषमाणः सतां साधूनां मध्ये प्रशंसनं प्रशंसां प्राप्नोतीत्यर्थः. ५५. यतश्चैवं ततः साधुः किं कुर्यादित्याह–भासाईति–साधुरेवंविधः सन् हितानुलोमं हितं परिणामसुन्दरमनुलोमं मनोहारि वचनं वदेत्, किं कृत्वा ? भाषायाः पूर्वकथिताया दोषान् गुणांश्च

भासाइ दोसे अ गुणे अ जाणिआ तीसे अ दुट्ठे परिवज्जए सया । छसु संजए सामणिए
सया जए वइज्ज बुद्धे हिअमाणुलोमिअं ५६. परिक्खभासी सुसमाहिइंदिए चउक्कसायावगए
अणिस्सिए । स निद्धुणे धुन्नमलं पुरेकडं आराहए लोगमिणं तहा परं त्ति बेमि ५७.

सुवक्कसुद्धी अज्झयणं सम्मत्तं ७.

ज्ञात्वा, किंविशिष्टः साधुः ? तस्या दुष्टाया भाषायाः परिवर्जकः, पुनः किंविशिष्टः साधुः ? छसु संजए, षट्सु जीवनिकायेषु संयतः, पुनः किंविशिष्टः साधुः ? श्रामण्ये श्रमणभावे चारित्रपरिणामभेदे सदा सर्वकालमुद्युक्तः, पुनः किंविशिष्टः साधुः ? बुद्धः ज्ञाततत्त्वः. ५६. अथोपसंहरन्नाह–परिक्खभासीति–स एवंविधः साधुरेनं मनुष्यलोकं वाक्संयतत्वेनाराधयति प्रगुणी-

करोति, किं कृत्वा ? धूलमलं पापमलं पुराकृतं जन्मान्तरे कृतं निर्धूय प्रस्फोट्य, तथा परलोकमाराधयति निर्वाणलोकं यथासम्भवमनन्तरं पारम्पर्येण वा किंविशिष्टः साधुः ? परीक्ष्यभाषी आलोच्यभाषी, पुनः किंविशिष्टः साधुः ? सुसमाहितेन्द्रियः सुप्रणिहितेन्द्रिय इत्यर्थः पुनः किंभूतः साधुः ? अपगतचतुष्कषायः क्रोधादिकषायनिरोधकर्ता इति भावः पुनः किंभूतः साधुः ? अनिश्रितो द्रव्यभावनिश्रारहितः प्रतिबन्धविप्रमुक्तः, ब्रवीमीति पूर्ववत् १७ इति श्रीसमयसुन्दरोपाध्याय विरचितायां दशवैकालिकशब्दार्थवृत्तौ वाक्यशुद्ध्यध्ययनं समाप्तम् श्रीरस्तु ७ आयारेति—व्याख्यातं वाक्यशुद्ध्यध्ययनं

अथाचारप्रणिधिनामाध्ययनं प्रारभ्यते ।

आयारप्पणिहिं लद्धुं जहा कायव्व भिक्खुणा । तं भे उदाहरिस्सामि आणुपुव्विं सुणेह मे १

नाम सप्तममध्ययनम् अथाचारप्रणिधिनामकमष्टममध्ययनं प्रारभ्यते, अस्य चायमभिसम्बन्धः—इतः पूर्वाध्ययने साधुना वचनगुणदोषान् जानता निष्पापं वचनं वक्तव्यमित्युक्तं, इह तु निष्पापं वचनमाचारे स्थितस्य भवतीत्याचारे यत्नः कार्यः इत्येतदुच्यत इति अनेन सम्बन्धेनायातमिदमध्ययनं व्याख्यायते, तथाहि—श्रीमहावीरदेवः स्वकीयशिष्यान् गौतमादीनेवमाह—तमाचारप्रणिधिं भे भवतः उदाहरिष्यामि कथयिष्याम्यानुपूर्व्या परिपाट्या यूयं शृणुत मे मम कथयत इति शेषः, तं कं ?

यमाचारप्रणिधिं लब्ध्वा प्राप्य भिक्षुणा साधुना यथा येन प्रकारेण विहितानुष्ठानं कर्तव्यम् १. अथ तं प्रकारमाह—पुढवीति
महर्षिणा श्रीवर्धमानेन गौतमेन वा इत्येवमुक्तं, एवं किमित्याह—एते जीवाः, एते क इत्याह—पृथिव्युदकाग्निवायवः, पुनस्तृ-
णवृक्षाः सबीजाः, एते पञ्चकेन्द्रियाः पूर्ववत्, त्रसाश्च प्राणिनो द्वीन्द्रियादयः, एते सर्वेऽपि जीवा ज्ञेयाः २. यतश्चैते जीवा-
स्ततः किं कर्तव्यमित्याह—तेसिमिति—भिक्षुणैतेषां पृथिव्यादिजीवानामक्षणयोगेनाहिंसाव्यापारेण नित्यं भवितव्यं वर्तितव्यं

पुढविदगअगणिमारुअ तणरुक्खस्स बीयगा । तस्सा अ पाणा जीवत्ति इइ वुत्तं महेसिणा २.

तेसिं अत्थणजोएण निच्चं होअव्वयं सिआ । मणसा कायवक्केणं एवं हवइ संजए ३.

पुढविं भित्तिं सिलं लेलुं नेव भिंदे न संलिहे । तिविहेण करणजोएण संजए सुसमाहिए ४.

स्यात्, केन ? मनसा कायेन वाक्येन, एभिः कारणैरित्यर्थः, एवं वर्तमानोऽहिंसकः सन् संयतः सम्भवति नान्यः ३. एवं
सामान्येन षड्जीवनिकायस्याहिंसायां संयतत्वं कथयित्वा तद्गतविधिं विधानतो विशेषेणाह—पुढविमिति—संयतः साधुः पृथिवीं
शुद्धां भित्तिं तटीं शिलां पाषाणरूपां लेष्टुमिष्टालखण्डं नैव भिद्यान्न सँलिखेत्, तत्र भेदनं द्वैधीभावाद्व्यापादनं, सँलेखनमी-
षल्लेखनं, त्रिविधेन त्रिकरणयोगेन न करोति मनसा वचसा कायेन किंभूतः संयतः ? सुसमाहितः समाधिमान् शुद्ध इत्यर्थः ४.

सुद्धेति-पुन' किञ्च संयत. शुद्धपृथिव्यां शस्त्रेण या नोपहता तस्यां पृथिव्यां न निषीदेत्, तथा पुनरासने पीठकादौ न निषी देत्, निषीदनग्रहणात्स्थानत्वग्वर्तपरिग्रह' किंभूत आसने ? सरजस्के पृथिवीरजोऽवगुण्ठित वा, तर्हि कथ कुर्यात् ? अचे तनां पृथिवीं ज्ञात्वा रजोहरणेन प्रमृज्य निषीदेत्, किं कृत्वा ? अवग्रह याचित्वा, कोऽर्थः ? यस्य गृहस्थादे' सम्बन्धिनी पृथिवी वर्तते, तं गृहस्थमनुज्ञाप्यादेश लात्वेत्यर्थ' ५ इति पृथिवीकायविधिरुक्त' अथाप्कायविधिमाह-सीओदगमिति-संयत' साधु' शीतोदकं पृथिवीतदुद्भवं सचित्तोदकं सचित्तपानीयं न सेवेत तथा शिलावृष्टं हिमानि च न सेवेत, अत्र शिला

सुद्धपुढवीं न निसीए ससरक्खमि अ आसणे । पमज्जित्तु निसीइज्जा-जाइत्ता जस्स उग्गहं ५.
सीओदग न सेविज्जा सिलावुट्ठ हिमाणि अ । उसिणोदग तत्तफासुअ पडिगाहिज्ज, संजए ६
उदउल्लमप्पणो कायं नेव पुंछे न संलिहे । समुप्पेह तहाभूअं नो, णं संघट्टए मुणी ७

ग्रहणेन करकाः परिगृह्यन्ते, वृष्टं वर्षणं, हिमं प्रसिद्ध, प्राय उत्तरापथे भवति आह-यद्येव तर्हि कथं साधुर्वर्तेत इत्याह-उष्णो दकं क्वथितोदकं तप्तप्रासुकं तप्त सत्प्रासुक त्रिदण्डोद्वृत्तं नोष्णोदकमात्रं प्रतिगृह्णीयाद्वृत्त्यर्थम्, एतच्च सौवीरादीनामुपलक्षणम्, ६ उदउल्लमिति-पुनर्नदीमुत्तीर्णो भिक्षायां प्रविष्टो वा वृष्टिहत उदकार्द्रमुदकबिन्दुव्याप्तमात्मन' कायं शरीरं स्निग्धं वा नैव पुञ्छयेत्, वस्त्रतृणादिभिर्न संलिखेत्, पाणिना हस्तेनापि, किं कृत्वा ? समुत्प्रेक्ष्य निरीक्ष्य, तथाभूतमुदकार्द्रादिरूप

कायं नैनं संघट्टयेत्, मनागपि न संस्पृशेत्. ७. उक्तोऽप्कायविधिः, अथ तेजःकायविधिमाह–इङ्गालमिति–मुनिरग्निं प्रत्येवं न कुर्यात्, एवं किमित्याह–अङ्गारं ज्वालारहितम्, अग्निमयःपिण्डातानुगं, तथार्चिः प्रदीपादेश्छिन्नज्वाला, तथा अलातमुल्मुकं वा सज्योतिः साग्निकमित्यर्थः, किमित्याह—नोत्सिञ्चेन्न घट्टयेत्, ततोत्सिञ्चनमुत्सेचनं प्रदीपादेर्घट्टनं मिथश्चालनं, तथा नैनमग्निं निर्वापयेदभावमापादयेत् ८. इति तेजस्काय उक्तः, अथ वायुकायविधिमाह–तालीति–मुनिरात्मनः कायं न वीजयेद्बाह्यं वापि

इंगालं अगणिं अच्चिं अलायं वा स जोइअं । न उंजिज्जा न घट्टिज्जा नो णं निव्वावए मुणी ८.

तालिअंटेण पत्तेण साहाए विहुणेण वा । न वीइज्ज अप्पणो कायं बाहिरं वावि पुग्गलं[१] ९.

तणरुक्खं न छिन्दिज्जा फलं मूलं च कस्सई । आमगं विविहं बीअं मणसा वि ण पत्थए १०.

गहणेसु न चिट्ठिज्जा बीएसु हरिएसु वा । उदगंमि तहा निच्चं उत्तिंगपणगेसु वा ११.

पुद्गलमुष्णोदकादिं, केन न वीजयेदित्याह–तालवृन्तेन व्यजनविशेषेण, तथा पत्रेण पद्मिनीपत्रादिना तथा शाखया वृक्षडालरूपया विधूपनेन व्यजनेन वा. ९. इति वायुकायविधिः प्रतिपादितः, अथ वनस्पतिकायविधिमाह–तणेति–साधुस्तृणवृक्षं न छिन्द्यात्, तत्र तृणानि दर्भादीनि, वृक्षाः कदम्बादयः, तथा वृक्षादेः कस्य चित् फलं मूलकं वा न छिन्द्यात् तथा आमकं शस्त्रेण यन्नोपहतम्, एवंविधं विविधमनेकप्रकारं बीजं साधुर्मनसापि न प्रार्थयेत्, कथं पुनर्भक्षयेत् ? १०. पुनः किं न कुर्यादित्याह–गहणेस्विति-

साधुर्गहनेषु वनेषु निकुञ्जेषु न तिष्ठेत्, सङ्घट्टनादिदोषप्रसङ्गात्, तथा बीजेषु प्रसारितशाल्यादिषु वा, तथा हरितेषु (वा) दूर्वादिषु न तिष्ठेत्, उदके तथा नित्यं तत्रोदकमनन्तवनस्पतिविशेषः, यथोक्त-'उदए अवए पणए' इत्यादि, उदकमेवेत्यन्ये,-तत्र नियमतो वनस्पतिभावात्, तथा उत्तिङ्गपनकयोर्वा न तिष्ठेत् तत्रोत्तिङ्गः सर्पच्छत्रादिः, पनक उल्लिवनस्पतिरिति ११ उक्तो वनस्पतिकायविधिः। अथ त्रसविधिमाह—तस इति—साधुस्त्रसान् प्राणिनो द्वीन्द्रियादीन्न हिंस्यात्,कथमित्याह—वाचा वचनेन,

तसे पाणे न हिंसिज्जा वाया अदुव कम्मुणा। उवरओ सव्वभूएसु पासेज्ज विविहं जगं १२

अट्ठ सुहुमाइं पेहाइं (ए) जाइं जाणित्तु संजए। दयाहिगारी भूएसु आस चिट्ठ सएहि वा १३

अथ वा कर्मणा कायेन, मनसोऽपि प्रहणं कार्यं, तस्य तयोरन्तर्गतत्वात् पुनः साधुरुपरतः सन्, केषु? सर्वभूतेषु दूरीकृतदण्डः सन् पश्येद्विविधं जगत्कर्मपरतन्त्रं नरकादिगतिरूपं निर्वेदायेति सूत्रार्थः १२ उक्तः स्थूलविधिः, सूक्ष्मविधिमाह—अष्टेति—संयतः साधुरष्टौ सूक्ष्माण्यग्रे वक्ष्यमाणानि प्रेक्ष्य निरीक्ष्योपयोगत आसीत तिष्ठेच्छयीत वेति योगः, किंभूतानि सूक्ष्माणीत्याह—यानि ज्ञात्वा संयतो ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया च भूतेषु दयाधिकारी भवति, अन्यथा दयाधिकापत्र न

१ वनस्पतिविचारेऽस्यापि रक्षणे।

स्यात्, तानि प्रेक्ष्य तद्रहित एवासनादि कुर्यात्, अन्यथा तेषां सातिचारतेति. १३. कानि पुनस्तान्यष्टावित्याह–कयराइ-मिति–कतराणि तान्यष्टौ सूक्ष्माणि ? यानि दयाधिकारित्वस्याभावभयात्पृच्छेत्संयतः, अनेन दयाधिकारिण एवंविधेषु प्रयत्नविधिमाह–स ह्यवश्यं तदुपकारकाण्यपकारकाणि च पृच्छति तत्रैव भावप्रतिबन्धादिति, अमूनि च तान्यनन्तरवक्ष्यमाणान्याचक्षीत विचक्षण इत्यनेनाप्येतदेवाह–मर्यादावर्तिना तज्ज्ञेन तत्प्ररूपणा कार्या, एवं हि श्रोतुस्तदुपादेयबुद्धिर्भवति, अन्यथा तु विपर्यय इति. १४. सिणहेमिति–स्नेहसूक्ष्ममवश्यायहिममिहिकाकरकहरतनुरूपं, पुष्पाणि तानि तद्वर्णानि सूक्ष्माणीति

कयराइं अट्ठ सुहुमाइं जाइं पुच्छिज्ज संजए। इमाइं ताइं मेहावी आइक्खिज्ज विअक्खणो १४.

सिणेहं पुप्फसुहुमं च पाणुत्तिंगं तहेव य। पणगं बीअहरिअं च अंडसुहुमं च अट्ठमं १५.

न लक्ष्यन्ते, ' पाणीति ' प्राणिसूक्ष्मअनुद्धरिः कुन्थुः, स हि चलन् विभाव्यते, न स्थितः, सूक्ष्मत्वात्, उत्तिङ्गसूक्ष्मं कीटिकानगरं, तत्र कीटिका अन्ये च सूक्ष्मसत्त्वा भवन्ति, तथा पनकमिति पनकसूक्ष्मं प्रायः प्रावृट्काले भूमिकाष्ठादिषु पञ्चवर्णस्तद्द्रव्यलीनः पनक इति, तथा बीजसूक्ष्मं शाल्यादिबीजस्य मुखमूले कणिका, या लोकेषु तुषमुखमित्युच्यते, हरितं चेति हरितसूक्ष्मं च, तथात्यन्तमभिनवमुद्भिन्नं पृथिवीसमानवर्णमेवाण्डसूक्ष्मं चाष्टममिति. एतच्च मक्षिकाकीटिकागृहकोकिलाब्राह्मणी-

गृहस्थासादीनामन्तमिति १५ पुन: सूत्र—एवमिति–साधुर्नित्य सर्वकाल यतेत मनोवचनकायेन कृत्वा जीवानां संरक्षणं प्रति, किं कृत्वा ? एव पूर्वोक्तप्रकारेणैतान्यष्टौ सूक्ष्माणि ज्ञात्वा, केन ? सर्वभावेन सूत्रादेशेन शक्त्यनुरूपेण, किंभूत संयत ? संयमवान्, पुन किंभूत साधु ? अप्रमत्त प्रमादनिवारारहित, पु० किंभूत साधु ? सर्वेन्द्रियसमाहितः सर्वेषामिन्द्रियाणां विषयेषु रागद्वेषावगच्छन् १६ पुन साधु किं कुर्यादित्याह–धुवमिति–ध्रुवं च नित्य च यो यस्य काल उक्तोऽनागत

एयमेआणि जाणित्ता सव्वभावेण संजए । अप्पमत्तो जए निच्च सव्विंदिअसमाहिए १६

धुव च पडिलेहिज्जा जोगसा पायकंबल । सिज्जमुच्चारभूमिं च संथार अदुवासण १७

उच्चार पासवण खेल सिंघाणजल्लिअ । फासुअ पडिलेहित्ता परिट्ठाविज्ज संजए १८

परिभोगे च तस्मिन् प्रत्युपेक्षेत, केन ? सिद्धान्तविधिना, क सति ? योगे सति सामर्थ्ये सति, किं प्रत्युपेक्षेत इत्याह–पात्रकम्बल, पात्रग्रहणादलाबुदारुमयादिपरिग्रहः, कम्बलग्रहणादूर्णासूत्रमयपरिग्रहः, तथा शय्यां वसतिं द्विकालं त्रिकालमुच्चारभुवं चानापातवदादि स्थण्डिलं, तथासनमपवादेन गृहीतं पीठफलकादि साधु सर्व यतनया प्रत्युपेक्षेतेत्यर्थ १७ पुन साधु किं कुर्यादित्याह—उच्चारेति–संयत साधुरेतानि परिष्ठापयेदुत्सृजेत्, किं कृत्वा ? प्रासुकं, स्थण्डिलमिति शेष, प्रत्युपेक्ष्य

एतानि कानीत्याह—उच्चारं प्रस्रवणं श्लेष्म सिंहाणजल्लं च, एतानि सर्वाणि प्रसिद्धानि. १८. इत्युपाश्रयस्थानविधिरुक्तः. अथ गोचरप्रवेशनमाश्रित्याह—पावीति–साधुर्यतं यतनया गवाक्षादि विलोकनेन विना उचितदेशे तिष्ठेत्, किं कृत्वा ? परस्य गृहस्थस्यागारं गृहं पानार्थं भोजनस्य वा ग्लानादेरौषधार्थं वा प्रविश्य, पुनः साधुर्मितं यतनया भाषेतागमनप्रयोजनादि, परं न च रूपेषु दातृकान्तादिषु मनः कुर्यात्, एवंभूतान्येतानीति न मनो निवेशयेत्, रूपग्रहणेन रसादयोपि ग्राह्याः. १९. अथ गोचरादिगत एव साधुः केन चित्तथाविधं पृष्टः किं ब्रूयादित्याह, अथवा साधुरुपदेशस्याधिकारे सामान्येनैवमाह—

पविसित्तु परागारं पाणट्ठा भोअणस्स वा। जयं चिट्ठे मिअं भासे न य रूवेसु मणं करे १९.

बहुं सुणेइ कन्नेहिं बहुं अच्छीहिं पिच्छइ। न य दिट्ठं सुअं सव्वं भिक्खू अक्खाउमरिहइ २०.

सुअं वा जइ वा दिट्ठं न लविज्जोवघाइअं। न य केण उवाएणं गिहिजोगं समायरे २१.

बहुमिति–बह्वनेकप्रकारं शोभनमशोभनं च साधुः शृणोति कर्णाभ्यां शब्दसमूहमिति शेषः, तथा बह्वनेकप्रकारमेव शोभनमशोभनं चाक्षिभ्यां पश्यति, रूपसमूहमिति शेषः, परं न च दृष्टं श्रुतं सर्वं स्वस्य परस्योभयस्य चाहितमपि तव पत्नी रुदतीत्येवमादिकं भिक्षुराख्यातुं कथयितुं नार्हति चारित्रस्य घातात्, अर्हति च स्वपरोभयहितं दृष्टस्ते शिष्यो राजानमुपशामयन्, एतादृशं तु वचनं कथयेत्. २०. पुनरेतदेव स्पष्टयन्नाह—सुअमिति—साधुः श्रुतं वान्यतो यदि वा दृष्टं वा स्वयमेव वा

एतादृशं वचनं नाल्पेन्न भाषेत कीदृशं वचनमौपघातिकमुपघातेन निर्वृत्त तत्फल वा औपघातिकं यथा त्वं चौर इत्यादि, अतोऽन्यस्क्षेपेदपीति गम्यते, तथा न च केनचिदुपायेन सूक्ष्मपापि भङ्गया गृहियोगं गृहसम्बन्धं तद्बालग्रहणादिरूपं गृहिव्यापारं प्रारम्भरूपं समाचरेत्कुर्यात् चेति २१ निट्ठाणमिति—पुन किञ्च साधुर्निष्ठानादेर्लाभमलाभं च न निर्दिशेत् किमाश्रित्य ? निष्ठानं सर्वगुणं सहितं रसनिर्यूढमेतद्विपरीतं कदशनमेतदाश्रित्यार्थ भद्रकं द्वितीयं पापकमिति वा, किम्भूत साधु पृष्ट केनापि कीदृग्लब्धमिति पृष्टो न निर्दिशेत्, अथ साधु लब्धमसाधु वा कथं शोभनमिदमशोभनं वेदं नगरम्

निट्ठाण रसनिज्जूढं भद्दगं पावगंति वा । पुट्ठो वा वि अपुट्ठो वा लाभालाभं न निद्दिसे २२

न य भोअणम्मि गिद्धो चरे उञ्छं अयंपिरो । अफासुअं न भुंजिज्जा कीअमुद्देसिआहडं २३

सन्निहिं च न कुव्विज्जा अणुमायंपि संजए । मुहाजीवी असंबद्धे हविज्ज जगनिस्सिए २४

२२, पुन किञ्च—नेति—साधुर्भोजने गृद्ध सन् प्रधानवस्तुप्राप्तिनिमित्तं धनसमृद्धानां गृहे मुख्यमङ्गल्क्रिया न चरेत्, अपि तु उञ्छं भावतो ज्ञाताज्ञातमजल्पनशील सन् धर्मलाभमात्रकथक सन् चरेत्, तत्राप्यप्रासुकं सचित्त सन्मिश्रादिकं कथञ्चित् गृहीतमपि न भुञ्जीत, अथवा क्रीतमौद्देशिकमाहृतं प्रासुकमपि न भुञ्जीत २३ पुन किञ्च—सन्निहितमिति—संयत साधु सन्निधिं च प्राङ्निरूपितस्वरूपं न कुर्यादणुमात्रमपि स्तोकमात्रमपि, किम्भूत संयत ? मुधा-

जीवी, अर्थः पूर्ववत्. पुनः किम्भूतः संयतः ? असम्बद्धो गृहस्थैर्नलिनीपत्रोदकवत्, एवंभूतः सन् भवेज्जगन्निश्रितश्चराचरसंरक्षणप्रतिबद्धः. २४. लूहवित्तीति–किंभूतः साधुः ? आसुरत्वं च क्रोधभावं न गच्छेत्, किं कृत्वा ? जिनशासनं श्रुत्वा, क्वचित्स्वपक्षादौ क्रोधविपाकप्रतिपादकं वीतरागवचनमाकर्ण्य, किंभूतः साधुः ? रूक्षवृत्तिः, रूक्षैर्वल्लचणकादिभिर्वृत्तिरस्येति रूक्षवृत्तिः, पुनः किंभूतः साधुः ? सुसन्तुष्टः, येन केन सन्तोषगामी, पुनः किंभूतः साधुः ? अल्पेच्छः, न्यूनोदरतया आहारपरित्यागी सुभरः स्यादल्पेच्छत्वात्, एवं दुर्भिक्षादाविति फलं प्रत्येकं वा स्यादिति क्रियायोगः, रूक्षवृत्तिः स्यादिति. २५.

लूहवित्ती सुसंतुट्ठे अप्पिच्छे सुहरे सिआ। आसुरत्तं न गच्छिज्जा सुच्चा णं जिणसासणं २५.

कन्नसुक्खेहिं सद्देहिं पेमं नाभिनिवेसए। दारुणं कक्कसं फासं काएण अहिआसए २६.

खुहं पिवास दुस्सिज्जं सीउन्हं अरइं भयं। अहिआसे अवहिओ देहदुक्खं महाफलं २७.

कन्नेति–पुनः किञ्च साधुः शब्देषु वेणुवीणासम्बन्धिषु न प्रेमाभिनिवेशयेत्, न तेषु रागं कुर्यादित्यर्थः, किंभूतेषु शब्देषु ? कर्णयोः सौख्यहेतुषु, पुनः किं कुर्यात्साधुः ? स्पर्शं प्राप्तं सन्तं कायेनातिसहेत, न तत्र द्वेषं कुर्यात्, किंभूतं स्पर्शं ? दारुणं रौद्रमनिष्टमित्यर्थः, पुनः किंभूतं स्पर्शं ? कर्कशं कठिनम्, अनेनाद्यन्तयोर्द्वयो रागद्वेषयोर्निवारणेन सर्वेन्द्रियविषयेषु रागद्वेषप्रतिषेधो वक्तव्यः. २६. खुहमिति–किञ्च संसारे तत्सर्वमधिसहेत, तत्किमित्याह–क्षुधं बुभुक्षां, पिपासां तृषं, दुःशय्यां विषमभू-

म्यादिरूपा, शीतार्त्तं प्रसिद्धम्, अरतिं मोहनीयकर्मोद्भवां, भयं व्याघ्रादिसमुद्भवं, किंभूतः साधुः ? अव्यथितोऽदीनमनाः सन् देहदुःखं महाफलं सञ्चिन्त्यति शपेत्, तथा च शरीरे सत्येतद् दुःखं शरीरं वा सम्यगतिसहमानं च मोक्षफलमवेदमिति २७

अत्थमिति—पुनः किञ्च साधुराहारात्मकं सर्वमाहारजातं समस्तमेवं सति मनसापि न प्रार्थयेत्, किमङ्ग पुनर्वाचा कर्मणा वेति, एव सतीति किम् ? आदित्ये सूर्येऽस्तगतेऽस्तपर्वतं प्राप्तेऽदर्शनीभूते वा पुरस्ताच्चानुद्गते प्रत्यूषस्यनुदित इत्यर्थः २८

दिवाऽलभ्यमानेऽप्याहारे किमित्याह—अतिमिति—साधुरतिन्तिणो भवेत्, अतिन्तिणो नाम अलाभेऽपि न यत्किञ्चनभाषी, तथा

अत्थं गयम्मि आइच्चे पुरत्था अ अणुग्गए। आहारमाइयं सव्वं मणसा वि ण पत्थए २८

अतिंतिणे अचवले अप्पभासी मिआसणे। हविज्ज उअरे दंते थोवं लद्धुं न खिंसए २९

न बाहिरं परिभवे अत्ताणं न समुक्कसे। सुअलाभे न मज्जिज्जा जच्चा तवस्सिबुद्धिए ३०

साधुरचपलो भवेत्, सर्वत्र स्थिर इत्यर्थः, तथाल्पभाषी भवेत्कारणे परिमितवक्ता, तथा मिताशनो भवेत्, मितभोजी स्यात्, तथा उदरे दान्तः, येन वा तेन वा वृत्तिशील, तथा स्तोकं लब्ध्वा न खिंसयेत् दातारं वा न हीलयेत् २९ मदवर्जनार्थमाह—नेति—न बाह्यमात्मनोऽन्यं परिभवेत्, सामान्येनेत्थम्भूतोऽहमिति तथा श्रुतलाभाभ्यां श्रुतेन श्रुतज्ञानेन लाभेनाहारादिप्राप्त्या न माद्येत, पण्डितोऽहं लब्धिमानहमिति तथा जात्या तापस्येन बुद्ध्या वा न माद्येत, यथाहं जातिसम्पन्नः, अहं

तपस्वी, अहं बुद्धिमानित्येवम्, उपलक्षणं चैतत्कुलबलरूपाणां, यथा कुलसम्पन्नोऽहं, बलसम्पन्नोऽहं रूपसम्पन्नोऽहमित्येवं न माद्येतेत्यर्थः ३०. अथ ओघत आभोगानाभोगसेवितमर्थमाह स इति—साधुर्जानन्नजानन् वा आभोगतोऽनाभोगतश्चेत्यर्थः आत्मानं क्षिप्रं भावतो निवृत्त्यालोचनादिना प्रकारेण संवरेत्, किं कृत्वा ? अधार्मिकं पदं कथञ्चिद्रागद्वेषाभ्यां मूलोत्तरगुणविराधनामिति भावः, परं न पुनर्द्वितीयं तत्समाचरेदनुबन्धदोषात् ३१. पुनरेतदेवाह—अणायारमिति—साधुरनाचारं सपापयोगं

से जाणमजाणं वा कट्टु आहम्मिअं पयं। संवरे खिप्पमप्पाणं बीअं तं न समायरे ३१.

अणायारं परक्कम्मं नेव गूहे न निन्हवे। सुई सया वियडभावे असंसत्ते जिइंदिए ३२.

अमोहं वयणं कुज्जा आयरिअस्स महप्पणो। तं परिगिज्झ वायाए कम्मुणा उववायए ३३.

पराक्रम्यासेव्य गुरुसमीप आलोचयन्न निगूहेन्न निह्नुवीतेति, तत्र निगूहनं किञ्चित्कथनं, निह्नवः सर्वथापलापः, किम्भूतः साधुः ? शुचिः, न कलुषमतिः, सदा विकटभावः, प्रकटभावः ।, पु० साधुः असंसक्तः अप्रतिबद्धः कत्रापि किम्भूतः पुनः साधुः ? जितेन्द्रियोऽप्रमादः सन्. ३२. पुनराह—अमोहमिति—साधुराचार्याणां वचनमिदं कुर्वित्यादिरूपममोघं सफलं कुर्यात्, एवमित्यङ्गीकारेण, किम्भूतानामाचार्याणां ? महात्मनां श्रुतादिभिर्गुणैस्तद्वचनं परिगृह्य वाचा एवमित्यङ्गीकारेण कर्मणा

उपपादयेत्क्रियया सम्पादयेत् ३३ पुनराह—अधुवमिति—साधुर्भोगेभ्य कर्मबन्धस्य हेतुभ्यो निवर्तेत, किं कृत्वा ? जीवित-मध्रुवमनित्यं मरणासन्नं ज्ञात्वा, पुन किं कृत्वा ? सिद्धिमार्गं सम्यग्दर्शनचारित्रलक्षणं विज्ञाय, तथा अशुभमप्यायु परिमित संवत्सरशतादिमानेन विज्ञायात्मनो निवर्तेत भोगेभ्य इत्यर्थ ३४ उपदेशाधिकारे प्रक्रान्त इदमेव समर्थयन्नाह—बलमिति—साधुरात्मानं नियोजयेत्, किं कृत्वा ? बलं मानसं स्थाम शारीरं प्रेक्ष्य विचार्य, पुन श्रद्धामारोग्यमात्मन पुन क्षेत्रं काल

अधुवं जीविअं नच्चा सिद्धिमग्गं विआणिआ । विणिअट्टिज्ज भोगेसु आउं परिमिअप्पणो ३४

बलं थाम च पेहाए सद्धामारुग्गमप्पणो । खित्तं कालं च विन्नाय तहप्पाणं निजुंजए ३५

जरा जाव न पीडेई वाही जाव न वड्ढई । जाविंदिआ न हायंति ताव धम्मं समायरे ३६

कोहं माणं च मायं च लोभं च पाववड्ढणं । वमे चत्तारि दोसे उ इच्छंतो हिअमप्पणो ३७

च विज्ञाय ३५ किं ज्ञात्वात्मानं नियोजयेदित्याह—साधुस्तावन्तं कालं धर्मं चारित्रधर्मं समाचरेत्, तावत् कियन्तं काल-मित्याह—यावज्जरा वयोहानिरूपा न पीडयति, पुनर्यावद्व्याधि क्रियासामर्थ्यशत्रुर्न वर्धते, पुनर्यावदिन्द्रियाणि क्रियासामर्थ्य-स्योपकारीणि श्रोत्रादीनि न हीयन्ते, तावत्, अत्रान्तरे प्रस्ताव इति कृत्वा धर्मं समाचरेत् ३६ अथ धर्मस्योपायमाह—कोहमिति—साधु क्रोधं मानं मायां लोभं च पापवर्धनं पापस्य हेतव, यतश्चैवं तत एतांश्चतुरो दोषान् क्रोधादीन् वमेत्त्य-

जेत्, किं कुर्वन् ? आत्मनो हितमिच्छन्, एतद्वमने हि सर्वसम्पदिति. ३७. अवमने त्विह लोक एव कष्टमाह—कोह इति—क्रोधः
प्रीति प्रणाशयति, क्रोधान्धस्य वचनतः प्रीतेर्विच्छेददर्शनात्, मानो विनयनाशनः, गर्वेण विनयकरणस्यादर्शनात्, माया मि-
त्राणि नाशयति, कौटिल्यवतो मित्रत्यागदर्शनात्, लोभः सर्वविनाशनः, परमार्थतस्त्रयाणामपि प्रीत्यादीनां नाशदर्शनात्. ३८.
यत एवं ततः किं कर्तव्यमित्याह—उवसमेणेति—साधुः क्रोधमुपशमेन क्षान्तिरूपेण हन्यात्, कथम् ? उदयनिरोधोदय-

कोहो पीइं पणासेई माणो विणयनासणो । माया मित्ताणि नासेइ लोभो सव्वविणासणो ३८. उव

समेण हणे कोहं माणं मद्दवया जिणे। मायमज्जवभावेण लोभं संतोसओ जिणे ३९. कोहो अ माणो अ

अणिग्गहीअ माया अ लोभो अ पवड्ढमाणा। चत्तारि एए कसिणा कसाया सिंचाति मूलाइं पुणप्भवस्य४०.

प्राप्तफलीकरणेन, एवं मानं मार्दवेनानुत्सिक्ततया जयेत्, उदयनिरोधादिनैव, मायां च ऋजुभावेनाशठतया जयेदुदयनिरो-
धादिनैव, एवं लोभं सन्तोषतो निस्पृहत्वेन जयेत्, तदुदयनिरोधोदयप्राप्तफलीकरणेनेति. ३९. क्रोधादीनामेव परलोके कष्ट-
माह—कोह इति—एते कषायाश्चत्वारोऽपि पुनर्भवस्य पुनर्जन्मवृक्षस्य मूलानि तथाविधकर्मरूपाणि सिञ्चन्ति, अशुभभाव-
जलेनेति शेषः, किम्भूताः कषायाः ? कृत्स्नाः सम्पूर्णाः कृष्णा वा क्लिष्टाः, के कषायाः ? क्रोधश्च, मानश्च, एतौ द्वावनि-

गहीतौ उच्छृङ्खलौ, माया च लोभश्च, एतौ द्वौ विवर्धमानौ वृद्धिं गच्छन्तौ सन्तौ ४० यतश्चैवमत कषायनिग्रहार्थमिद कुर्यादित्याह—रायणिएस्विति—साधु रत्नाधिकेषु चिरदीक्षितादिषु विनयमभ्युत्थानादिरूप प्रयुञ्जीत, पुनर्ध्रुवशीलतामष्टादशशीलाङ्गसहस्रपालनरूपां सततं निरन्तरं यथाशक्ति न हापयेत्, पुन कूर्म इव कच्छपवदालीनप्रलीनगुप्त, अङ्गोपाङ्गानि च सम्यक्संयम्येत्यर्थ पराक्रमेत प्रवर्तेत तप संयमे तप प्रधाने संयम इति ४१ निद्रमिति—पुन किञ्च साधुर्निद्रां च न बहु मन्यत न प्रकामशायी स्यात्, पुन स साधु प्रहासमतीवहासरूप विवर्जयेत्, पुन परस्परं कथासु राहस्यिकीषु

रायणिएसु विणय पउजे धुवसीलय सयय न हावइज्जा । कुम्मुव्व अल्लीणपलीणगुत्तो परक्कमिज्जा तव
संजमंमि ४१ निद्दं च न बहु मनिज्जा सप्पहास विवज्जए । मिहो कहाहिं न रमे सज्झायमि रओ
सया ४२. जोगं च समणधम्ममि जुंजे अनलसो धुव। जुत्तो अ समणधम्मंमि अट्ठ लहइ अणुत्तरं ४३

न रमेत, तर्हि किं कुर्यादित्याह—स्वाध्याये वाचनादौ रत तत्पर स्यात् सदा ४२ जोगमिति—एवं योगं च त्रिविध मनोवाक्कायव्यापारं श्रमणधर्मे क्षान्तिप्रमुखलक्षणे युञ्जीत, किंभूत साधु ? अनलस उत्साहवान्, ध्रुव कालादीनामौचित्येन नित्यं सम्पूर्ण, सर्वत्र प्रधानोपसर्जनभावेन वा अनुप्रेक्षाकाले मनोयोगम्, अध्ययनकाले वाग्योगं प्रत्युपेक्षणाकाले काययोगमिति फलमाह—युक्त एवं व्यापृतः, कुत्र ? श्रमणधर्मे दशविधे लभते अर्थ प्राप्नोत्यनुत्तरं भावार्थं ज्ञानादिरूपमिति ४३

पुनरेतदेवाह–इहेति–इह लोके परत्र लोके च हितं, कथम् ? इह लोकेऽकुशलप्रवृत्तिदुःखनिरोधेन, परलोके च कुशलानुबन्धत उभयलोकहितमित्यर्थः, येनार्थेन ज्ञानादिना करणभूतेन साधुः सुगति पारम्पर्येण सिद्धिमित्यर्थः, गच्छति, अथोपदेशाधिकार उक्तव्यतिकरसाधनस्योपायमाह–बहुश्रुतमागमवृद्धं साधुः पर्युपासीत सेवेत, तं सेवमानश्च साधुः पृच्छेदर्थविनिश्चयमपायरक्षकं कल्याणावहं वा अर्थावितथभावमिति. ४४. हत्थमिति–पुनः किञ्च मुनिर्गुरोः सकाशे समीपे निषीदेत् ?

इहलोगपारत्तहिअं जेणं गच्छइ सुग्गइं । बहुस्सुअं पज्जुवासिज्जा पुच्छिज्जत्थविणिच्छयं ४४.

हत्थं पायं च कायं च पणिहाय जिइंदिए । अल्लीणगुत्तो निसिए सगासे गुरुणो मुणी ४५.

न पक्खओ न पुरउ नेव किच्चाण पिट्ठओ । न य ऊरुं समासिज्ज चिट्ठिज्जा गुरुणंतिए ४६.

अपुच्छिओ न भासिज्जा भासमाणस्स अंतरा । पिट्ठिमंसं न खाइज्जा मायामोसं विवज्जए ४७.

कीदृशस्सन् आलीनगुप्तईषल्लीन उपयुक्त इत्यर्थः । किं कृत्वा निषीदेत् ? हस्तं च पादं च कायं च प्रणिधाय संयम्य, पुनः किं कृत्वा ? जितेन्द्रियो निभृतो भूत्वा. ४५. नेति–पुनः किं कार्यं ? साधुः कृत्यानामाचार्याणां न पक्षतः पार्श्वतो निषीदेत्, एवं न पुरतोऽग्रतः, नापि पृष्ठतो मार्गतः, यथासङ्ख्यमविनयवन्दमानान्तरायादर्शनादिदोषाः प्रभवन्ति, पुनस्तत्र ऊरुं समाश्रित्य ऊरोरुपर्यूरुं कृत्वा न तिष्ठेत्, गुरोरन्तिकेऽविनयादिदोषप्रसङ्गात्. ४६. इत्युक्तः कायप्रणिधिः, अथ वाक्यप्रणिधिमाह–अपुच्छि

विज्ञं, किं कृत्वा नोपहसेत् ? तं तादृशं वाग्विस्खलितं ज्ञात्वा विविधमनेकप्रकारैर्लिङ्गभेदादिभिः स्खलितं विज्ञाय नोपहसेत्, किन्त्वेवं जानाति वदति च, अहो खल्वाचारादिधरस्य वचन एवं कौशलम्, इह च दृष्टिवादमधीयानमित्युक्तम्, अत इदं गम्यते नाधीतदृष्टिवादं, तस्य ज्ञानाप्रमादातिशयतः स्खलनासम्भवात्, यद्येवंभूतस्यापि स्खलितं सम्भवति, न चैवमुपहसेदित्युपदेशः, ततोऽन्यस्य सुतरां सम्भवति न चासौ हसितव्य इति. ५०. नक्खत्तमिति–पुनः किंच साधुर्गृहिणा पृष्टः सन्नेतानि गृहिणामसंयतानां नाचक्षीत न ब्रूयात्, एतानि कानीत्याह–नक्षत्रमश्विन्यादि, स्वप्नं शुभाशुभफलमनु-

नक्खत्तं सुमिणं जोगं निमित्तं मंतभेसजं । गिहिणो तं न आइक्खे भूआहिगरणं पयं ५१.

अन्नट्ठं पगडं लयणं भइज्ज सयणासणं । उच्चारभूमिसंपन्नं इत्थी पसुविवज्जिअं ५२.

भूतादिं, योगं वशीकरणादिं, निमित्तमतीतादि, मन्त्रं वृश्चिकमन्त्रादि, भेषजमतिसारादीनां रोगाणामौषधम्, एतत् षट्कं किंविशिष्टमित्याह–भूताधिकरणं पदं, भूतान्येकेन्द्रियादीनि सङ्घट्टनादिनाधिक्रियन्ते व्यापाद्यन्ते ऽस्मिन्निति. ततश्च तदप्रीतिपरिहारार्थमिदं ब्रूयात्, यतस्तपस्विनामत्र नक्षत्रादौ नाधिकारः. ५१. अन्नट्ठामिति–पुनः किञ्च साधुरेवं लयनं स्थानं वसतिरूपं भजेत् सेवेत, किम्भूतं लयनम् ? अन्यार्थं प्रकृतं, न साधुनिमित्तं कृतं, तथा शयनासनमप्यन्यार्थ-प्रकृतं संस्तारकपीठकादि सेवेत, पुनः किम्भूतं लयनम् ? उच्चारभूमिसंपन्नमुच्चारप्रस्रवणादिभूम्या संयुक्तं, कथम् ?

उच्चारादिभूमिरहिते स्थाने वारंवारमुच्चारादिनिर्गमने दोषा भवन्ति, पुन' किम्भूत स्थानं ? स्त्रीपशुविवर्जितमेकग्रहणेन तज्जातीयानां ग्रहणमिति न्यायात्, स्त्रीपशुपण्डकविवर्जितं, स्त्रीमुखालोकनादिरहितमित्यर्थ' ५२ तदित्थम्भूतं स्थानं सेवमानस्य साधोर्धर्मकथाविधिमाह—विवित्तेति–साधुर्यद्येवविधा शय्या वसतिर्भवेत्तदा नारीणां स्त्रीणां कथां न कथयेत्, कथं ? शङ्कादिदोषप्रसङ्गात् योग्यतां विज्ञाय पुरुषाणां कथयेत्, नारीणां त्वविविक्तायां वसतौ कथयेदपि, किम्भूता शय्या वसति' ? विविक्ता तदन्यसाधुभिर्वर्जिता यत्रान्ये साधवो न सन्ति, चशब्दात्तथाविधभुजङ्गप्रायैकपुरुषसयुक्ता भवेत्, तथापि न नारीणां

विवित्ता अभवे सिज्जा नारीण न लवे कहं । गिहिसथवं न कुज्जा कुज्जा साहूहिं सथवं ५३

जहा कुक्कुडपोअस्स निच्च कुललओ भयं । एवं खु बम्भयारिस्स इत्थीविग्गहओ भयं ५४

चित्तभित्तिं न निज्झाए नारिं वा सुअलंकिअं । भक्खरं पिव दट्ठूण दिट्ठिं पडिसमाहरे ५५

कथां कथयेत्, तथा पुन' साधुर्गृहिसंस्तवं न कुर्यात्, स्नेहादिदोषसम्भवात्, साधुभिस्तु समं संस्तवं परिचयं काले कल्याणमित्रयोगेन कुशलपक्षवृद्धिभाव कुर्यादिति ५३ कथञ्चित् गृहिसंस्तवभावेऽपि स्त्रीसंस्तवो नैव कर्तव्य इत्यत्र कारणमाह—जहेति—यथा कुक्कुटपोतस्य कुक्कुटबालस्य नित्यं सर्वकालं कुललतो मार्जाराद्भयं, एवं ब्रह्मचारिण' साधो स्त्रीविग्रहात् स्त्रीशरीराद्भयं, विग्रहग्रहणं मृतशरीरादपि भयख्यापनार्थम् ५४ यतश्चैवं तत किं कार्यमित्याह—चित्तभित्तिमिति–एवंवि

धामपि नारीं साधुर्न निध्यायेन्न पश्येत्, किम्भूतां नारीं ? चित्रगतां पुनः किम्भूतां नारीं ? स्वलङ्कृतामलङ्कारैः शोभिताम्, उपलक्षणत्वादनलङ्कृतामपि न निरीक्षेत, कथञ्चिद्दर्शनयोगेऽपि भास्करमिव सूर्यमिव दृष्ट्वा दृष्टिं प्रतिसमाहरेन्निवर्तयेदिति. ५५. हत्थेति—किं बहुना ? ब्रह्मचारी साधुरीदृशीमपि नारीं विवर्जयेत्, किमङ्ग पुनस्तरुणीं नारीं सुतरामेव विवर्जयेत्, किंविशिष्टां नारीम् ? हस्तपादपरिच्छिन्नां, यस्या हस्तौ पादौ छिन्नौ वर्तेते, पुनः किम्भूतां नारीम् ? कर्णनासाविकृत्तां, कर्णौ नासा

हत्थपायपलिच्छिन्नं कन्ननासविगप्पिअं । अवि वाससयं नारिं बंभयारी विवज्जए ५६.
विभूसा इत्थिसंसग्गो पणीअं रसभोअणम् । नरस्सत्तगवेसिस्स विसं तालउडं जहा ५७.
अंगपच्चंगसंठाणं चारुल्लविअपेहिअं । इत्थीणं तं न निज्झाए कामरागविवड्ढणं ५८.

च विकृत्ता यस्यास्तां, पुनः किम्भूतां नारीम् ? वर्षशतिकाम्, एतादृशीं वृद्धामपि वर्जयेत्, कः कानिव ? महाधनो यथा चौरान् वर्जयेत् ५६. विभूसेति-अपिच नरस्यात्मगवेषिण एतत्सर्वं विभूषादि तालपुटविषं, यथा तालमात्रव्यापत्तिकराविषकल्पं, तत्किमित्याह—विभूषा वस्त्रादिराढा शोभा, स्त्रीसंसर्गो येन केनाचित्प्रकारेण स्त्रीसम्बन्धः, प्रणीतरसभोजनं गलत्स्नेहरसभक्षणम्. ५७. अंगेति-पुनः किञ्च साधुः स्त्रीणामेतानि न निध्यायेन्न निरीक्षेत न पश्येत्, कुत इत्याह—

१ शीघ्रमेवेति क, पु

कामरागविवर्धनमिति, एतन्निरीक्ष्यमाणं मोहवोपान्मैथुनाभिलाषं वर्धयति, अत एवास्य प्राक्स्त्रीणां निरीक्षणप्रतिषेधाद्गतार्थतायामपि प्राधान्यख्यापनार्थं भेदेनोपन्यासः कृतः, एतानि कानीत्याह—अङ्गानि शिरःप्रभृतीनि, प्रत्यङ्गानि नयनादीनि, एतेषां संस्थानं विन्यासविशेषं, तथा चारु शोभनं लपितं जल्पितं प्रेक्षितं निरीक्षितं स्त्रीणां सम्बन्धि सर्वम् ५८ किञ्च एस्विति- पुनः किञ्च साधुर्विषयेषु शब्दादिषु प्रेम रागं नाभिनिवेशयेत्न कुर्यात्, किम्भूतेषु विषयेषु ? मनोज्ञेष्विन्द्रियाणाम् अनुकूलेषु, अमनोज्ञेषु च द्वेषं न कुर्यात्, किं कृत्वा ? तेषां पुद्गलानां शुभशब्दादिविषयसम्बन्धिनामनित्यतया परिणामं विज्ञाय

विसएसु मणुन्नेसु पेमं नाभिनिवेसए । अणिच्चं तेसिं विन्नाय परिणामं पुग्गलाण य ५९

पोग्गलाणं परीणामं तेसिं नच्चा जहा तहा । विणीयतिण्हो विहरे सीईभूएण अप्पणा ६०

जाइ सद्धाइ निक्खंतो परिआयट्ठाणमुत्तमं । तमेव अनुपालिज्जा गुणे आयरिअसंमए ६१

जिनवचनानुसारेण कथं ? विज्ञायते हि मनोज्ञा अपि क्षणादमनोज्ञतया परिणमन्ति, अमनोज्ञा अपि क्षणान्मनोज्ञतया परिणमन्ति, ततस्तयोरुपरि रागद्वेषकरणं निरर्थकमिति ५९ एतदपि स्पष्टयन्नाह—पोग्गलाणमिति—शीतीभूतेन क्रोधादीनां त्यागात्प्रशान्तेनात्मना विहरेत्, किं कृत्वा ? तेषां पूर्वोक्तानां पुद्गलानां परिणामं यथा मनोज्ञामनोज्ञतया भवन्ति, तथा ज्ञात्वा, किम्भूतः साधुः ? विनीततृष्णो गताभिलाषः शब्दादिषु ६० जाईति—पुनः किञ्च साधुस्तामेव श्रद्धामप्रतिपातितया

प्रवर्धमानां गुणेषु मूलगुणादिलक्षणेषु पालयेत्, किम्भूतेषु गुणेषु ? आचार्यसम्मतेषु तीर्थकरादिमतेषु, तां कां ? यया श्रद्धया प्रधानगुणस्वीकाररूपया निष्क्रान्तोऽविरतिकर्दमाद्दीक्षास्थानमुत्तमं प्रधानं प्राप्तः. ६१. अथाचारप्रणिधिफलमाह—तवमिति—साधुरेवंविधः सन् शूर इव विक्रान्तसुभट इव, अलमत्यर्थमात्मनः संरक्षणाय, अलं च परेषां निवारणाय भवति, किम्भूतः साधुः ? तपश्चेदमनशनादि द्वादशभेदरूपं सर्वसाधुप्रसिद्धं संयमयोगं च पृथिव्यादिविषयसंयमव्यापारं च स्वाध्याययोगश्च

तवं चिमं संजमजोगयं च सज्झायजोगं च सया अहिट्ठिए ।
सुरे व सेणाइ समत्तमाउहे अलमप्पणो होइ अलं परेसिं ६२.
सज्झायसज्झाणरयस्स ताइणो अपावभावस्स तवे रयस्स ।
विसुज्झई जं सि मलं पुरे कडं समीरिअं रुप्पमलं व जोइणा ६३.

वाचनादिव्यापारं च सदा सर्वकालमधिष्ठाता तपःप्रभृतीनां कर्ता इत्यर्थः, किम्भूतः शूरः ? सेनया चतुरङ्गबलरूपया इन्द्रियकषायादिसेनया विरुद्धः सन् समाप्तायुधः सम्पूर्णतपःप्रभृतिखड्गायुधः. ६२. एतदेव स्पष्टयन्नाह—सज्झायेति—अस्य साधोर्यन्मलं कर्ममलं तद्विशुद्धयते अपैति दूरे यातीत्यर्थः, किम्भूतं मलं ? पुराकृतं. जन्मान्तरेषु उपात्तमुपार्जितं, केन किंवत् ? यथा रूप्यमलं, किम्भूतं रूप्यमलं ? समीरितं प्रेरितं, केन ? ज्योतिषाग्निना, किम्भूतस्य साधोः ? स्वाध्यायस

द्यानरतस्य, स्वाध्याय एव सद्ध्यानं स्वाध्यायसद्ध्यानं, तत्र रतस्यासक्तस्य, पुन' किम्भूतस्य साधो' ? त्रायुः, स्वस्य परस्योभयपो श्च रक्षणशीलस्य, पुन' किम्भूतस्य साधो ? अपापभावस्य, लब्ध्यादीनां या अपेक्षा तया रहिततया शुद्धचित्तस्य, पुन' किम्भूतस्य साधो' ? तपस्यनशनादौ द्वादशविधे रतस्य, एवंविधस्य शुद्धस्य साधो' पापं दूरे यातीति परमार्थ ६३ ततश्च साधु कीदृशो भवेदित्याह—स इति—स तादृश' पूर्वोक्तगुणयुक्त' साधुर्विराजते, क इव ? चन्द्रमा इव, क सति ? कृत्स्नाभ्रपुटापगमे समस्तानामभ्रपुटानामपगमे नाशे सति, अयं भाव —यथा शरत्काले चन्द्रमा' शोभते

से तारिसे दुक्खसहे जिइदिए सुएण जुत्ते अममे अकिंचणे।

विरायई कम्मघणमि अवगए कसिणब्भपुडावगमे चदिमिचि वेमि ६४

आयारपणिही णाम अज्झयण समत्त ८,

तथा साधुरप्यपगतकर्मघन' समासादितकेवलालोको विराजत इत्यर्थ' किम्भूतः साधु ? दु'खसह परीषहपीडासह, पुन' किम्भूत साधु ? जितेन्द्रिय' पराजितश्रोत्रादिपञ्चेन्द्रियविषयः, पुन' किम्भूत' साधु ? श्रुतज्ञानेन युक्तो विद्यावानित्यर्थ', पुन' किम्भूत' साधु' ? अमम' सर्वत्र ममतारहित', पुन' किम्भूत' साधु ? अकिञ्चन' किञ्चनरहित', ब्रवीमीति पूर्ववत् ६४ इति श्रीदशवैकालिके सूत्रे श्रीसमयसुन्दरोपाध्यायविरचितायां दीपिकायामष्टमाध्ययनं सम्पूर्णं श्रीरस्तु

थंभेति—अथ विनयसमाध्याख्यं नवममध्ययनं व्याख्यायते, तस्य नवमाध्ययनस्य चत्वार उद्देशाः, तत्र प्रथमोद्देशकमाह, इह चायं सम्बन्धः—पूर्वाध्ययने निष्पापं वचनमाचारे प्रणिहितस्य सम्यक्स्थितस्य भवतीति तत्र यत्नवता भाव्यम्, इत्येतदुक्तम्, इह त्वाचारप्रणिहितो यथायोग्यविनयसम्पन्न एव भवति, इत्येतदुच्यते, तथाहि—शिष्यो गुरोः सकाश आचार्यादेः समीपे विनयमासेवनारूपं शिक्षारूपं च न शिक्षते, नोपादत्ते, न गृह्णातीत्यर्थः, कस्मात् ? स्तम्भाद्वा, कथमहं जात्यादिमान् जात्यादिहीनस्य गुरोः समीपे शिक्षे ! तथा क्रोधात्कथञ्चिदसत्यकरणप्रेरितो रोषाद्वा, तथा मायातः शूलं मे बाधत इत्यादि-

अथ विनयसमाध्याख्यं नवममध्ययनं प्रारभ्यते ।

**थंभा व कोहा व मयप्पमाया गुरुस्सगासे विणयं न सिक्खे ।**
**सो चेव उ तस्स अभूइभावो फलं व कीअस्स वहाय होइ १.**

कपटेन, तथा प्रमादात्प्रक्रान्तमुचितमजानन् निद्रादीनां व्यासङ्गेन, स्तम्भादीनां क्रमेणोपन्यासश्च इत्थमेवामीषां विनयस्य विघ्नतामाश्रित्य ख्यापनार्थः, तदेवं स्तम्भादिभ्यो गुरोः समीपे विनयं न शिक्षते, अन्ये त्वाचार्या एवं पठन्ति—गुरोः समीपे विनये न तिष्ठति, विनये न वर्त्तते, विनयं नासेवत इत्यर्थः; इह स एव स्तम्भादिर्विनयशिक्षाविघ्नहेतुस्तस्य जडमतेरभूतिभाव इति, अभूतेर्भावोऽभूतिभावः, असम्पद्भाव इत्यर्थः, किमित्याह—वधाय भवति, गुणलक्षणभावप्राणविनाशाय भवति. दृष्टान्त-

माह–फलमिव कीचकस्य कीचको वंशस्तस्य फलं यथा वधाय भवति, तस्मिन् सति तद्विनाशनाद्, तद्वदिति १ ॥ इति–
किञ्च ये चापि केचनाल्पसाधवोऽगम्भीरा भवन्ति, ते ह्यल्पसाधवो गुरूणामाचार्याणामाशातनां लघुतापादनरूपां तत्स्थापनाया
अबहुमानेन कुर्वन्ति, एकस्य, गुरोराशातनायां सर्वेषां गुरूणामाशातना इति हेतोर्गुरूणामिति बहुवचनं, मन्द इति ज्ञात्वा,
सत्प्रज्ञाविकल इति ज्ञात्वा, तथा पुनः कारणान्तरस्यापितमप्राप्तवयसं गुरुं प्रत्ययं डहरोऽप्राप्तवयाः स्वल्पयं, तथायं गुरुरल्प-

ज आवि मंदित्ति गुरु वइत्ता डहरे इमे अप्पसुअत्ति नच्चा ।
हीलंति मित्थ पडिवज्जमाणा करन्ति आसायण ते गुरूण २
पगईइ मदा वि भवंति एगे डहरा वि अ जे सुअबुद्धोववेआ ।
आयारमंतो गुणसुट्ठिअप्पा जे हीलिआ सिहिरिव भास कुज्जा ३

श्रुतोऽनधीतसिद्धान्त इति ज्ञात्वा हीलयन्ति, किं कुर्वन्तो हीलयन्ति ? मिथ्यात्वं प्रतिपद्यमाना, गुरुर्न हीलनीय इति
तत्त्वमन्यथा जानन्तः, अतो गुरोर्हीलना न कार्या इत्याह २ पगई इति–ये साधवस्ते गुरून् प्रत्येवं जानन्ति, प्ररूपयन्ति
परं न तु हीलयन्ति, एवं किमित्याह–एके केचन वयोवृद्धा प्रकृत्या स्वभावेन कर्मवैचित्र्यान्मन्दा अपि सद्बुद्धिरहिता अपि

भवन्ति, तथान्ये केचन डहरा अप्यपरिणता अपि वयसा अमन्दा भवन्तीति वाक्यशेषः, किंविशिष्टा इत्याह—ये श्रुतबुद्ध्या उपेताः सहिताः, तथा सत्प्रज्ञावन्तः, श्रुतेन बुद्धिभावेन वा भाविनीं वृत्तिमाश्रित्याल्पश्रुता अपि सर्वथा आचारवन्तो ज्ञानाद्याचारसहिताः. पुनः किंविशिष्टाः ? गुणसुस्थितात्मानः, गुणेषु सुष्ठु भावसारं स्थित आत्मा येषां ते तथाविधा न हीलनीयाः, ये हीलिताः खिंसिताः शिखीव अग्निरिव इन्धनसमूहं भस्मसात्कुर्युः, ज्ञानादिगुणसमूहमपनयेयुरिति. ३. अथ

जे आवि नागं महरंति नच्चा आसायए से अहिआय होइ ।
एवायरिअंपि हु हीलयंतो निअच्छई जाइपहं खु मंदो ४.
आसीविसो वा वि परं सुरुट्ठो किं जीवनासाउ परं नु कुज्जा ।
आयरिअपाया पुण अप्पसन्ना अबोहिआसायण नत्थि मुक्खो ५.

विशेषेण डहरस्य हीलने दोषमाह—ज इति—यश्चापि कश्चिदज्ञो नागं सर्पं डहर इति बाल इति ज्ञात्वा आशातयति क्षुद्रकाष्ठादिना कदर्थयति, स नागः कदर्थ्यमानः से तस्य कदर्थनाकारकस्याहिताय भवति, भक्षणेन प्राणनाशनात्, एष दृष्टान्तः, अथोपनयः—एवमाचार्यमपि कारणतोऽपरिणतमेव स्थापितं हीलयन्निर्गच्छति जातिपन्थानं द्वीन्द्रियादिजातिमार्गं मन्दोऽज्ञः संसारे परिभ्रमति. ४, अत्र दृष्टान्तस्य दार्ष्टान्तिकस्य च महदन्तरमित्येतदेवाह—आसीविस इति—आशीविषश्चापि सर्पोऽपि

परं मृत्युं मन् मुन्दं मन, किं जीवितनाशान्मृत्यो' परं नु कुर्यात् ? नं किञ्चिदपीत्यर्थं, आचार्यपादा' पुनरप्रसन्ना हीलन-पानुमदायापमृताः, किं कुर्वन्तीत्याह—अबोधिं निमित्तहेतुत्वेन मिथ्यात्वसहतिं कुर्वन्ति, कथं ? तदाशातनया मिथ्यात्वबन्धाव-पतर्धेरमता गुरुराशातनया नास्ति मोक्ष', अबोधिसन्तानबन्धेनानन्तसंसारिकत्वादिति ५. पुनराह—जो इति-य' कोऽपि पारद्मार्गे ज्वलित सन्तमपक्रामेदवष्टम्य तिष्ठति, आशीविषं वापि भुजङ्गमं वापि कोपयेद्रोष ग्राहयेत्, यो वा विषं खादति

जो पावग जलिअमवक्कमिज्जा आसीविसं वा वि हु कोवइज्जा ।

जो वा विसं खायइ जीविअट्ठी एसोवमासायणया गुरूण ६

सिआ हु से पावय नो डहिज्जा असीविसो वा कुविओ न भक्खे ।

सिआ विसं हालहलं न मारे न आ वि मुक्खो गुरुहीलणाए ७

जीवितार्थी जीवितुकाम', एषा उपमापायस्य कष्टस्य मार्तिं भत्येतदुपमानमाशातनया गुरूणां सम्बन्धिन्या कृतया, तदुत्कृष्ट भवतीति ६ तत्र विशेषमाह—सिआ इति—स्यात्कदाचिन्मन्त्र्यादिप्रतिबन्धादसौ पावकोऽग्नि दहति न भस्मसात्कुर्यात्, आशीविषो वा भुजङ्गो वा कुपितो न भक्षयेन्न खादयेत्, तथा कदाचिन्मन्त्र्यादिप्रतिबन्धादेव विषं हालाहलमतिरौद्रं न मारयेन्न प्राणान् त्याजयेत्, एवमेतत्कदाचित्प्रसति परं नापि मोक्षो गुरुहीलनया गुरोराशातनया भवतीति ७

ज इति–पुनः किञ्च यः पर्वतं शिरसा मस्तकेन भेत्तुमिच्छेत्, सुप्तं वा सिंहं गिरिगुहायां प्रतिबोधयेत्, यो वा ददाति शक्तेरग्रे प्रहरणविशेषाग्रे प्रहारं हस्तेन, एषा उपमा आशातनया गुरूणाम् ८. अत्र विशेषमाह—सियेति–स्यात्कदाचित्कश्चिद्वासुदेवादिः प्रभावातिशयाच्छिरसा मस्तकेन गिरिमपि पर्वतमपि भिन्द्यात्, स्यात्कदाचिन्मन्त्रादिसामर्थ्यात्सिंहः; कुपितो न

जो पव्वयं सिरसा भित्तुमिच्छे सुत्तं व सीहं पडिबोहइज्जा ।
जो वा दए सत्तिअग्गे पहारं एसोवमासायणया गुरूणं ८.
सिया हु सीसेण गिरिं पि भिंदे सिआ हु सीहो कुविओ न भक्खे ।
सिआ न भिंदिज्ज व सत्तिअग्गं न आ वि मुक्खो गुरुहीलणाए ९.
आयरिअपाया पुण अप्पसन्ना अबोहिआसायण नत्थि मुक्खो ।
तम्हा अणाबाहसुहाभिकंखी गुरुप्पसायाभिमुहो रमिज्जा १०.

भक्षयेत्, स्यात्कदाचिद्देवतानुग्रहादिना शक्त्यग्रं प्रहारे दत्तेऽपि न भिन्द्यात्, एवमेतत्कदाचिद्भवति, परं न चापि मोक्षो गुरुहीलनया गुरोराशातनया भवतीति. ९. एवं पावकाशातना अल्पा, गुर्वाशातना महतीत्यातिशयप्रदर्शनार्थमाह–आयरियेति–

आचार्यपादा पुनरप्रसन्ना इत्यादिपदद्वयव्याख्या पूर्ववत्, यस्मादेवं तस्मादनाबाधसुखाभिकाङ्क्षी मोक्षसुखाभिलाषी, साधुर्गुरुप्रसादाभिमुख आचार्यादीनां प्रसाद उद्युक्त सन् रमेत १० केन प्रकारेण रमेतेत्याह–जहेति—आहिताग्नि कृतावसथादिर्ब्राह्मणो येन प्रकारेण ज्वलनमग्निं नमस्यति, किम्भूत ज्वलन ? नानाहुतिमन्त्रपदाभिषिक्तं, तत्राहुतयो घृतप्रक्षेपादिरूपा, मन्त्रपदानि 'अग्नये स्वाहा' इत्येवमादीनि तैराहुतिमन्त्रपदैरभिषिक्त दीक्षालङ्कृतमित्यर्थ, एवमभिमिषाचार्यं विनीत साधु–

जहाहिअग्गीजलणं नमंसे नाणाहुईमंतपयाभिसित्तं ।
एवायरिअं उवचिट्ठइज्जा[1] अणंतनाणोवगओ वि संतो ११
जस्संतिए धम्मपयाइं सिक्खे तस्संतिए वेणइयं पउंजे ।
सक्कारए सिरसा पंजलीओ कायग्गिरा भो मणसा अ निच्चं १२

रुपतिष्ठेद्विनयेन सेवेत, किम्भूत साधु ? अनन्तज्ञानोपगतोऽपि, अनन्त स्वपरपर्यायापेक्षया वस्तु ज्ञायते येन तदनन्त तेनोपगत, सहितोऽपि सन्, किमङ्ग पुनरन्य इति ११ एतदेव पुन स्पष्टयति–जस्समिति–साधुर्यस्याचार्यादे समीपे धर्मपदानि

१ उवगोऽपूर्वेविद्याभ्यासीरितोऽपि मनसाऽनन्त्र मूलस्यपदानुकरणलाभेति व्येयम् ।

धर्मफलानि सिद्धान्तपदानि शिक्षेतादद्यात्, तस्याचार्यादेरन्तिके समीपे विनयं प्रयुञ्जीत, विनय एव वैनयिकं, तत्कुर्यादिति भावः, कथं विनयं कुर्यादित्याह—गुरुं सत्कारयेत्, केन ? अभ्युत्थानादिना पूर्वोक्तेन युक्तः, पुनः शिरसा मस्तकेन प्राञ्जलिः सन्, तथा कायेन शरीरेण, तथा गिरा वाचा, 'मस्तकेन वन्द' इत्यादिरूपया, भो इति शिष्यस्यामन्त्रणे, मनसा भावप्रतिबन्धरूपेण, नित्यं सदैव सत्कारयेत्, न तु सूत्रग्रहणकाल एव, कुशलानुबन्धच्छेदनप्रसङ्गात्, १२

लज्जा दया संजमबंभचेरं कल्लाणभागिस्स विसोहिठाणं ।
जे मे गुरू सययमणुसासयंति तेहिं गुरू सययं पूअयामि १३.
जहा निसंते तवणच्चिमाली पभासई केवलभारहं तु ।
एवायरिओ सुअसीलवुद्धिए विरायई सुरमज्झे व इंदो १४.

एवं च मनसि कुर्यात्—लज्जेति—लज्जा दया संयमो ब्रह्मचर्यं च, एतच्चतुष्टयं कल्याणभागिनो मोक्षाभिलाषिणो जीवस्य विपक्षव्यावृत्त्या कुशलपक्षप्रवर्तकत्वेन च विशोधिस्थानं कर्ममलापनयनस्थानं वर्तते, तत्र लज्जा अपवादभयरूपा, दया अनुकम्पा, संयमः पृथिव्यादिविषयः, ब्रह्मचर्यं विशुद्धतपोऽनुष्ठानम्, एतत्कथनेनैतज्जातं, ये गुरवो मां सततं निरन्तरमनुशासयन्ति कल्याणयोग्यतां नयन्ति, तानहमेतादृशान् गुरून् सततं पूजयामि, न तेभ्योऽन्यः पूजायोग्य इति. १३. अतः कारणादेते

पन्या इत्याह—जहेति—अर्चिमाली सूर्यो निशान्ते रात्रेरन्ते दिवस इत्यर्थः, केवलं संपूर्ण भारतं भरतक्षेत्र, तुशब्दादन्यच्च, क्रमेण प्रभासयति उद्द्योतयति, किं कुर्वन् अर्चिमाली ? तपन्, एवमाचार्यो जीवादिभावान् प्रकाशयति, किम्भूत आचार्यः ? श्रुतशीलबुद्धिकः श्रुतेनागमेन शीलेन परद्रोहविरमणेन, बुद्ध्या च स्वाभाविक्या युक्तः सन्, एवं च वर्तमान आचार्य साधुभिः परिवृतो विराजते, क इव ? सुरमध्ये सामानिकादिदेवमध्ये गत इन्द्र इव, १४ पुनराह—जहेति—यथा चन्द्रः स

जहा ससी कोमुइजोगजुत्तो नक्खत्ततारागणपरिवुडप्पा ।
खे सोहई विमले अब्भमुक्के एव गणी सोहइ भिक्खुमज्झे १५
महागरा आयरिआ महेसी समाहिजोगे सुअसीलबुद्धिए ।
संपाविउकामे अणुत्तराइं आराहए तोसइ धम्मकामी १६

आकाशे शोभते, किम्भूत ? कौमुदीयोगयुक्त , कार्तिकपौर्णमास्यामुदित, पुनः किम्भूतश्चन्द्र ? नक्षत्रतारागणपरिवृतात्मा, नक्षत्रैस्ताराणां गणैर्वृन्दैर्युक्त इति भावः, किम्भूते खे ? अभ्रमुक्ते, पुन किम्भूते खे ? विमले, निर्मले अभ्रमुक्तमाकाशमत्यन्त निर्मलं भवतीति स्थापनार्थम्,तदेव चन्द्र इव गणी आचार्यः शोभते भिक्षुमध्ये अतोऽयं गुरुर्महस्वात्पूज्य इति १५. महागरेति—पुनः किम धर्मकामो निर्जरार्थी, न तु ज्ञानफलापेक्षयापि, साधुस्तानाचार्यान् सम्प्राप्तुकामोऽनुत्तराणि ज्ञानादीन्याराधयेद्विनयकु

रणेन, नैकवारमेव, किन्तु तोषयेद्वारंवारं विनयकरणेन सन्तोषं ग्राहयेत्, तान् कानाचार्यान् ? ये महाकराः, ज्ञानादिभावरत्नानामाकराः, पुनः किम्भूता आचार्याः ? महेषिणो मोक्षैषिणः, कथं महैषिणः इत्याह—समाधियोगश्रुतशीलबुद्धिभिः, समाधियोगैर्ध्यानविशेषैः श्रुतेन द्वादशाङ्गाभिधानेन शीलेन परद्रोहविरतिरूपेण बुद्ध्या च औत्पत्तिक्यादिरूपया, अन्य आचार्या इत्थं व्याख्यानयन्ति—समाधियोगश्रुतशीलबुद्धीनामाकरा इति. १६. पुनराह—सुच्चेति—मेधावी पण्डितः साधुः सदाचा-

सुच्चा ण मेहावि सुभासिआइं सुस्सूसए आयरिअप्पमत्तो।
आराहइत्ता ण गुणे अणेगे से पावई सिद्धिमणुत्तरं ति बेमि १७.

विणयसमाहीए पढमो उद्देसो संमत्तो १.

र्यान् शुश्रूषयेत्. किं कृत्वा ? सुभाषितानि गुर्वाराधनफलाभिधायकानि श्रुत्वा, किंविशिष्टो मेधावी ? अप्रमत्तो निद्रादिप्रमादरहितः, य एवं गुरुशुश्रूषापरः स गुणाननेकान् ज्ञानादिरूपानाराध्य सिद्धिमनुत्तरां मुक्तिमनन्तरं सुकुलादिपरम्परया वा प्राप्नोति. ब्रवीमीति पूर्ववत्. १७. इति श्रीदशवैकालिके शब्दार्थवृत्तौ श्रीसमयसुन्दरोपाध्यायविरचितायां नवमाध्ययने प्रथमोद्देशकः समाप्तः. १. श्रीरस्तु.

मूलाओ इति–अथ नवमाध्ययने विनयाधिकार एव द्वितीयोद्देशकः प्रारभ्यते, पूर्व प्रथमोद्देशके विनयसमाधि– रुक्त, द्वितीयोऽपि विनयाधिकारवानुच्यते, तत्र सूत्रं–द्रुमस्य वृक्षस्य मूलादादिप्रबन्धात्स्कन्धप्रभव, स्कन्धोत्पाद, तत स्कन्धात्प्रधाच्छाखास्तस्य शुभाकल्पा समुपयान्त्यात्मानं प्राप्नुवन्ति, उत्पद्यन्त इत्यर्थः, तथा शाखाभ्य उक्तस्वरूपाभ्य प्रशाखाशाखासांशभूता विरोहन्ति जायन्ते, तथा ताभ्योऽपि प्रशाखाभ्य पत्राणि पर्णानि विरोहन्ति, ततस्तदनन्तरं से

अथ द्वितीय उद्देश प्रारभ्यते।

मूलाओ खंधप्पभवो दुमस्स खंधाउ पच्छा समुविंति साहा। साहप्पसाहा विरुहंति पत्ता तओसि पुप्फं
च फलं रसो अ १ एव धम्मस्स विणओ मूलं परमो अ से मुक्खो। जेण किर्त्ति सुअं सिग्घं नीसेसं चा-
भिगच्छइ २. जे अ चंडे मिए थद्धे दुव्वाई नियडी सढे। वुज्झइ से अविणीअप्पा कट्ठं सोअगयं जहा ३

तस्य द्रुमस्य पुष्प च फलं च रसश्च १ एवं दृष्टान्तमभिधाय दार्ष्टान्तिकयोजनामाह—एवमिति–एवं धर्मस्य परमकल्पवृक्ष- स्य विनयो मूलमादिप्रबन्धरूपं परम इत्यग्रो रस से तस्य फलरसवन्मोक्षः, स्कन्धादिकल्पानि तु देवलोकगमनसुकुलागमा- दीनि, अतो विनय कर्तव्य, येन विनयेन कृत्वा साधु कीर्ति सर्वत्र शुभप्रवादरूपामधिगच्छति प्राप्नोति, पुन श्रुतमङ्गप्र विष्टादि, श्लाघ्यं प्रशंसास्पदीभूत निश्शेषं सम्पूर्ण च प्राप्नोति २ अथाविनयदोषमाह—जे इति–साधुरेतेभ्यो–

विनयं न करोति, स संसारस्रोतसा उह्यते, किंवत् ? काष्ठमिव, किम्भूतं काष्ठं ? स्रोतोगतं, नद्यादिवहनीपातितं, किम्भूतः साधुः ? चण्डो रोषणः, पुनः किम्भूतः साधुः ? मृगोऽज्ञो हितमप्युक्तो रुष्यति, पुनः स्तब्धः जात्यादिमदोन्मत्तः, पुनर्दुर्वादी अप्रियवक्ता, पुनर्निकृतिमान् मायासहितः, पुनः शठः संयमयोगेष्वादररहितः, पुनराविनीतात्मा सकलकल्याणकारणेन विनयेन रहितः. ३. विणयंमीति—पुनः किञ्च यो नरो विनयमुक्तलक्षणं प्रत्युपायैनैकान्तमृदुभणनादिलक्षणेनापि सम्बन्धेन चोदित उक्तः सन् कुप्यति, रुष्यति, स किं करोतीत्याह—स दिव्याममानुषीं श्रियं लक्ष्मीमागच्छन्तीमात्मनो भवन्तीं

विणयंमि जो उवाएणं चोइओ कुप्पई नरो। दिव्वं सो सिरिमिज्जन्तिं दंडेण पडिसेहए ४.
तहेव अविणीअप्पा उववज्झा हया गया। दीसंति दुहमेहंता आभिओगमुवट्ठिआ ५.

दण्डेन काष्ठमयेन प्रतिषेधयति निवारयति, अयं परमार्थः—विनयः सम्पदां निमित्तं, तत्र स्खलितं यदि कश्चिन्नोदयति स गुणः तत्रापि रोषकरणे वस्तुतः सम्पदां निषेधः ४. अविनयदोषस्योपदर्शनार्थमेवाह—तहेवेति—तथैव तेऽविनीतात्मानो विनयरहिता अनात्मज्ञा उपवाह्यानां राजादिवल्लभानामेते कर्मकरा इत्यौपवाह्या हया अश्वा गजा हस्तिन उपलक्षणत्वान्महिषादयश्चैते, किमित्याह—दृश्यन्त उपलभ्यन्त एव मन्दुरादावविनयदोषेणोभयलोकवर्तिना यवसादिवोढारः, दुःखं सङ्क्लेशलक्षणमेधमाना अने-

कार्यस्यादनुभवन्त अभियोग्यं कर्मकरभावमुपस्थिताः ५ एतेष्वेव विनयगुणमाह—तहेवेति—तथैवैते सुविनीतात्मानो विनयवन्त आत्मना औपवाह्या राजादीनां हया गजा इति पूर्ववत्,एते किमित्याह—दृश्यन्त उपलभ्यन्ते सुखमाह्लादलक्षणमेधमाना अनुभवन्त ऋद्धिं प्राप्ता इति विशिष्टभूषणाच्छभोजनादिभावत' मात्सर्दयो महाशयसो विख्यातसद्गुणाः ६ अथैतदेव विनयाविनयफलं मनुष्यानधिकृत्याह—तहेवेति—तथैव तिर्यञ्च इवाविनीतात्मन' पूर्ववत्, लोकेऽस्मिन् मनुष्यलोके, नरनार्य इति प्रकटार्थ, दृश्यन्ते दु:खमेधमाना' पूर्ववत्, छाता' कशाघातव्रणाङ्कितशरीरा विकलेन्द्रिया अपनीतनासिकादीन्द्रिया' पारदारिकादय इति

तहेव सुविणीअप्पा उववज्झा हया गया। दीसंति सुहमेहंता इड्ढिं पत्ता महायसा ६

तहेव अविणीअप्पा लोगंसि नरनारिओ। दीसंति दुहमेहन्ता छाया ते विगलिंदिआ ७

दंडसत्थपरिज्जुण्णा असब्भवयणेहि अ। कलुणा विवन्नच्छन्दा खुप्पिवासपरिग्गया ८

सूत्रार्थ' ७ दंडेति—एवंविधा' सायच इह लोके पूर्वमविनयेन गृहीतानां कर्मणामनुभावेनैवभूता' परलोके तु कुशलस्याप्रवृत्तेर्दु:खि ततरा विज्ञायन्ते, कीदृशाः ? दण्डा वेत्रदण्डादय', शस्त्राणि खड्गादीनि, तै' परिजीर्णा',परि समन्ततो दुर्बलभावमापादिता, तथा पुन' कीदृशाः ? असभ्यवचनैश्च खरकर्कशादिभि' परिजीर्णा', पुन' कीदृशा' ? करुणा' करुणाहेतुत्वात्, पुन' कीदृशा' ? व्यापन्नच्छन्दस' पराधीनतया गतस्वाभिप्राया', पुन' किम्भूताः ? क्षुधा बुभुक्षा, पिपासा तृषा, ताभ्यां परिगता व्याप्ता ,

अन्नादिनिरोधस्तोकदानाभ्याम्. ८. अथ विनयफलमाह—तहेवेति—अस्मिन् लोके नरनार्यस्तथैव विनीततिर्यञ्च इव सुविनीतात्मानो दृश्यन्ते, कीदृश्यो नरनार्यः ? सुखमेधमानाः ऋद्धिं प्राप्ताः, पुनः कीदृश्यः ? महायशस इति पूर्ववत्, नवरं स्वाराधितगुरुजना उभयलोकसाफल्यकारिण एत इति. ९. एतदेव विनयाविनयफलमाह देवानधिकृत्य—तहेवेति—तथैव यथा नरनार्योऽविनीतात्मानस्तथैव जन्मान्तरे अकृतविनया देवा वैमानिका ज्योतिष्का यक्षाश्च व्यन्तराश्च गुह्यका भवनवासिनस्त एते

तहेव सुविणीअप्पा लोगंसि नरनारिओ। दीसंति सुहमेहंता इड्ढिं पत्ता महायसा ९.
तहेव अविणीअप्पा देवा जक्खा अ गुज्झगा। दीसंति दुहमेहन्ता आभिओगमुवट्ठिआ १०.
तहेव सुविणीअप्पा देवा जक्खा अ गुज्झगा। दीसंति सुहमेहंता इड्ढिं पत्ता महायसा ११.

दृश्यन्ते, केन ? आगमभावचक्षुषा, किं कुर्वाणाः ? दुःखमेधमानाः, परेषामाज्ञया परेषाम् ऋद्ध्यादिदर्शनेन च, कीदृशाः सन्तः ? आभियोग्यमुपस्थिताः, अभियोग आज्ञादानलक्षणः, सोऽस्यास्तीत्यभियोगी, तस्य भाव आभियोग्यं कर्मकरभावमुपस्थिताः प्राप्ताः. १०. अथ विनयफलमाह—तहेवेति—तथैवैते देवादयः सुविनीतात्मानो जन्मान्तरकृतविनयाः, निरतिचारधर्माराधका इत्यर्थः, दृश्यन्ते सुखमेधमाना महाकल्याणादिषु ऋद्धिं प्राप्ता इति देवाधिपादिप्राप्तसमृद्धयो महायशसो विख्यातसद्गुणा

इति, एष नारकान् विना व्यवहारतो येषु स्थानेषु सुखदुःखसम्भवस्तेषु विनयस्याविनयस्य च फलं कथितम् ११ अथ विशेषतो लोकोत्तरं विनयफलमाह—ज इति—ये सुशिष्या आचार्याणामुपाध्यायानां च शुश्रूषावचनकरा' पूजाप्रधान यद्वचन तस्य करणे तत्परा भवन्ति, तेषां पुण्यवतां शिक्षा ग्रहणासेवनारूपा भावार्थरूपाः प्रवर्धन्ते वृद्धिं यान्ति, दृष्टान्तमाह जलसिक्ता यथा पादपा वृक्षा १२ एवं मनस्यानीय साधुभिर्विनय' कार्य इत्याह—अप्पणट्ठेति—ये गृहिणोऽसंयता इहलोकस्य कारणमिहलोकनि-

जे आयरियउवज्झायाण सुस्सूसावयणंकरे । तेसिं सिक्खा पवड्ढन्ति जलसित्ता इव पायवा १२

अप्पणट्ठा परट्ठा वा सिप्पा णेउणिआणि अ । गिहिणो उवभोगट्ठा इहलोगस्स कारणा(कारण) १३

जेण बधं वह घोर परिआव च वारुण । सिक्खमाणा निअच्छन्ति जुत्ता ते ललिइंदिआ १४

मित्तमिति, उपभोगार्थंभक्तपानादिभोगार्थं, शिक्षन्त इति शेष किमर्थम् आत्मार्थमात्मनिमित्तम्, अनेन ममाजीविका भविष्यतीत्येवं, परार्थं वा परनिमित्तं वा पुत्रमहमेतद्ग्राहयिष्यामीत्येवं शिल्पानि कुम्भकारक्रियादीनि, नैपुण्यानि च लेख्यादिकलालक्षणानि १३ जेणेति—येन शिल्पादिना शिक्ष्यमाणेन बन्ध निगडादिभिर्वधं कशादिभिः, घोरं रौद्रं परितापं च दारुणमेतज्जनितं निर्भर्त्सनादिवचनं शिक्षमाणा गुरोः सकाशान्नियच्छन्ति प्राप्नुवन्ति, युक्ता इति नियुक्ता' शिल्पादिग्रहणे ते ललितेन्द्रिया क्री-

ललगभश्रर्गं राजपुत्रादयः. १५. तेवीति–तेऽपि पुरुषाः शिक्षमाणस्तमित्वरमपि गुरुं बन्धादिकारकमपि पूजयन्ति सामान्यतो मधुरवचनाभिनन्दनेन, किमर्थं तस्य शिल्पस्य कारणात्, तन्निमित्तमिति भावः। पुनस्तं गुरुं ते सत्कारयन्ति वस्त्रादिना, पुनस्तं गुरुं नमस्यन्ति अञ्जलिप्रग्रहणादिना, किम्भूतास्ते ? तुष्टा इति, अमुत इदमवाप्यत इति तुष्टाः, पुनः किम्भूतास्ते? निर्देशवर्तिन आज्ञाकारिण इति. १५. किमिति–यदि तावदेतेऽपि तं गुरुं पूजयन्ति, तदा यः साधुर्मोक्षवाञ्छकस्तेन तु गुरवो विशेषतः

ते वि तं गुरु पूअंति तस्स सिप्पस्स कारणा। सक्कारन्ति नमंसंति तुट्ठा निद्देसवत्तिणो १५.

किं पुणं जे सुअग्गाही अणंतहिअकामए। आयरिआ जं वए भिक्खू तम्हा तं नाइवत्तए १६.

नीअं सिज्जं गई ठाणं नीअं च आसणाणि अ। नीअं च पाए वंदिज्जा नीअं कुज्जा अ अंजलिं १७.

पूजनीया इत्याह, किं पुनः ? यः साधुः श्रुतग्राही परमपुरुषप्रणीतस्यागमस्य ग्रहणेऽभिलाषी. पुनर्योऽनन्तहितकामुकः, मोक्षं यः कामयत इत्यभिप्रायः, तेन तु गुरवः सुतरां पूजनीया इति. यतश्चैवमत आचार्या यत्किमपि वदन्ति तथा तथानेकप्रकारम्, भिक्षुः साधुस्तस्मात्तदाचार्यवचनं नातिवर्तयेद्युक्तत्वात्सर्वमेव सम्पादयेदिति. १६. अथ विनयस्योपायमाह–नीअमिति–साधुर्गुरोः सकाशाच्छय्यां संस्तारकलक्षणां नीचां कुर्यादित्युक्तिः, एवं साधुराचार्यगतेः सकाशात्स्वकीयां गतिं नीचां

कुर्यात्, तस्य गुरोः पृष्ठतो नातिदूरेण नातिशीघ्र यायादित्यर्थः[3], एवं स्थान यत्र स्थान आचार्य आस्ते तस्मात्स्थानान्नीचं, नीचतरे स्थाने स्यातव्यमिति भाव । पुनर्नीचानि लघुतराणि कदाचित्कारणजात आसनानि पीठकादीनि, तस्मिन्नुपविष्टे तदनुज्ञात सन् सेवेत नान्यथा, तथा नीचं च सम्यगवनतमस्तकः सनाचार्यस्य पादौ वन्दते नावज्ञया, तथा कचित्प्रश्नादौ नीचं नम्रकाय कुर्याच्च सम्पादयेदञ्जलिं[5] न स्थाणुवत्स्तब्ध एवेति १७ एवं कायविनयं कथयित्वा वचनाविनयमाह—सङ्घट्टेति—साधुर्गुरुं प्रति मिथ्यादुष्कृतपुरःसरमभिवन्द्येव वदेत्, न पुनरिति, न चाहमेवं भूय करिष्यामीति एव किमित्याह—हे गुरो मम

संघट्टइत्ता[2] काएण तहा उवहिणामवि । खमेह[1] अवराहं मे वइज्ज न पुणुत्ति अ १८
दुग्गओ वा पओएण चोइओ वहई रहं । एव दुबुद्धि[1] किच्चाणं वुत्तो वुत्तो पकुव्वई[2] १९

मन्दभाग्यस्यापराधं दोषं क्षमस्व सहस्व[1] ? किं कृत्वा ? कायेन देहेन कथञ्चित्तथाविधे प्रदेश उपविष्ट गुरुं सङ्घट्ट्य स्पृष्ट्वा पुनरुपाधिनापि कल्पादिनापि कथञ्चित्सङ्घट्ट्य,[2] १८ एवं सर्वं बुद्धिमान्[1] स्वयमेव करोति, तदन्यस्तु कथमित्याह—दुग्गेति—दुर्गौरिव गलिबलीवर्दवत्प्रतोदेनारावण्डलक्षणेन चोदितः प्रेरितो विद्धः सन् वहति कापि नयति रथम्, एवं दुर्गौरिव दुर्बुद्धिः शिष्यः कृत्यानामाचार्यादीनां कृत्यानि वा तदभिरुचितकार्याणि उक्त उक्तः पुनः

पुनरभिहित इत्यर्थः, प्रकरोति निष्पादयति प्रयुङ्क्ते चेति. १९. आलवन्त इति–पुनराचार्यः शिष्यं प्रत्येकवारं वक्ति, अथवा पुनः पुनर्वक्ति, तदा स शिष्य आत्मन आसने स्थित एव वचनं श्रुत्वा नोत्तरं ददाति, किं करोति ? आत्मन आसनं मुक्त्वा स शिष्यो विनयेन द्वौ हस्तौ सम्मील्योत्तरं ददाति, कथम्भूतः सः ? धीरो बुद्धिमान्. एवं च कृतान्यप्यमूनि न शोभनानीत्यत आह—कालमिति–साधुस्तत्तत्पित्तहरादिरूपमशनादि गुरोः सम्प्रतिपादयेदुपानयेत्, केन केन ? तेन तेनोपायेन गृहस्थानामा-

❀ आलवंते लवंते वा न निसिज्जाइ पडिस्सुणे । मुत्तूण आसणं धीरो सुस्सूसाए पडिस्सुणे २०.

कालं छन्दोवयारं च पडिलेहित्ता ण हेउहिं । तेण तेण उवाएणं तं तं संपडिवायए २१.

विवत्ती अविणीअस्स संपत्ती विणिअस्स य । जस्से य दुहओ नायं सिक्खं से अभिगच्छइ २२.

वर्जनादिना, किं कृत्वा ? कालं शरदादिलक्षणं, छन्दस्तस्येच्छारूपमुपचारमाराधनाप्रकारम्, चशब्दाद्देशादिकम्, एतत्प्रत्युपेक्ष्य ज्ञात्वा, कैः ? हेतुभिर्यथानुरूपैः कारणैः, तथा काले शरदादौ पित्तहरादि भोजनं, शय्या प्रवातनिवातादिरूपा, इच्छानुलोमं वा यद्यस्य हितं रोचते चाराधनाप्रकारोऽनुलोमभाषणग्रन्थाभ्यासवैयावृत्त्यकरणादिः, देशोऽनूपदेशादीनामुचितं निष्ठीव-

❀ इयं क्षेपकगाथा बहुषु पुस्तकेषु नोपलभ्यते, पर दीपिकासवलितमूलपुस्तके उपलब्धा. १ प्राचीनपुस्तकद्वयेऽस्या गाथाया व्याख्यानं विंशतितमः क्रमाङ्क इष्यते ।

हिनामकं क्षपयित्वा, पुनः किं कृत्वा ? एनमुदधिं प्रत्यक्षोपलभ्यमानं संसारसमुद्रं दुरुत्तारं तीर्त्वा, चरमभवं केवलित्वं च प्राप्येति भावः. ब्रवीमीति पूर्ववत्. २४. इति श्रीदशवैकालिके शब्दार्थवृत्तौ श्रीसमयसुन्दरोपाध्यायविरचितायां विनयसमाध्याख्यनवमाध्ययने द्वितीयोद्देशः समाप्तः. २. आयरीति—अथ तृतीय आरभ्यते, इह च विनीतः पूज्यो भवेदिति दर्शयन्नाह—यः साधुराचार्यं सूत्रार्थप्रदं, तत्स्थानीयं चान्यं ज्येष्ठार्यं रत्नाधिकं वा प्रतिजागृयात्, तत्तत्कार्यसंपादनेनोपचरेत्, कः कामिव ? आहिताग्निर्ब्राह्मणोऽग्निमिव, किं कुर्वाणः साधुः आहिताग्निर्ब्राह्मणश्च ? शुश्रूषमाणः, सम्यक्सेवमानः प्रतिजागरमाणश्च, उपाय-

अथ तृतीय उद्देशः प्रारभ्यते।

**आयरिअ अग्गिमिवाहिअग्गी सुस्सूसमाणो पडिजागरिज्जा।**
**आलोइअं इंगिअमेव नच्चा जो छंदमाराहई स पुज्जो १.**

माह—पुनर्यः साधुराचार्यादीनामवलोकितं वीक्षितमिङ्गितमेव चान्यथावृत्तिलक्षणं ज्ञात्वा छन्दोऽभिप्रायमाचार्यादीनां विज्ञायाराधयति, कथमाराधयेदित्याह—शीते पतति सति प्रावरणावलोकने तस्यानयनेन, तथेङ्गिते च निष्ठीवनादिलक्षणे जाते सति शुण्ठ्यादीनामानयनेनैवं कुर्यात्, स इत्थम्भूतः साधुः पूज्यः पूजार्हः कल्याणभागिति. १. पुनः प्रक्रान्त एवाधिकार आह—

१ बहुषु पुस्तकेषु कामिवेति स्त्रीलिङ्गविशिष्टः पाठो दृष्टिदोषनिबन्धनो गड्डरिकाप्रवाहन्यायेन मन्तव्योऽन्यथाऽऽचार्यशुश्रूषमाणयोः को वा स्त्रीलिङ्गसम्बन्धः।

आयारति–य' साधुराचारार्थं ज्ञानादीनामाचाराणां निमित्तं विनयं पूर्वोक्तं प्रयुङ्क्ते करोति, किं कुर्वाणः ? शुश्रूषमाण' श्रोतु मिच्छन, पिमयं गुरुर्वक्ष्यत्येवं, ततस्तेन गुरुणोक्ते सति वाक्यमाचार्यादिकथितं परिगृह्य, ततो यथोपदिष्टं, यथा गुरुणोक्तं तथाभिकाङ्क्षन् मायारहित' श्रद्धया कर्तुमिच्छन् सन् विनय करोति, परं ततोऽन्यथाकरणेन गुरु नाशातयति न हीलयति, स

आयारमट्ठा विणय पउजे सुस्सूसमाणो परिगिज्झ वक्क ।
जहोवइट्ठं अभिकंखमाणो गुरु च नासायई स पुज्जो २
रायणिएसु विणय पउजे डहरा वि अ जे परिआयजिट्ठा ।
नीअत्तणे वट्टइ सच्चवाई उवायव वक्ककरे स पुज्जो ३

पूज्य' २ रायणीति–पुन' किंच य' साधु रत्नाधिकेषु भावरत्नैर्ज्ञानादिभिरधिकेषु विनयं पूर्वोक्तं प्रयुङ्क्ते करोति, तथा डहरा अपि च य वयसा श्रुतेन च ज्येष्ठा', पुनर्ये पर्यायज्येष्ठाश्चिरप्रव्रजिता', तेषु च यो विनयं प्रयुङ्क्ते, एवं यो नीचत्वे गुणाधिकान प्रति नीचभावे वर्तते, पुनर्योऽपि सत्यवाद्यविरुद्धवक्ता,तथावपातवान् वन्दनाशीलो निकटवर्ती वा, पुनर्यो वाक्यकरो

गुरोर्निर्देशकरणशीलः,स पूज्यः. ३. अन्नायेति–पुनः किञ्च साधुरज्ञातोञ्छं परिचयस्याकरणेनाज्ञातः सन् भावोञ्छं गृहस्थोद्धरितादि चरत्यटित्वानीतं भुङ्क्ते,न तु ज्ञातस्तद्बहुमतमिति,एतदपि विशुद्धमुद्गमादिदोषरहितं,न तद्विपरीतम्,एतदपि यापनार्थं संयमभारोद्वाहिदेहपालनाय,अन्यथा समुदानं चोचितभिक्षालब्धं च नित्यं सर्वकालं,न तूञ्छमप्येकत्रैव बहु लब्धं कादाचित्कं वा, एवम्भूतमपि विभागतोऽलब्ध्वाऽनासाद्य न परिदेवयेन्न खेदं यायात्, यथाहं मन्दभाग्यः अथवा नायं देशः शोभन इति, विभागतश्च लब्ध्वा

अन्नायउंछं चरई विसुद्ध जवणट्ठया समुआणं च निच्चं ।
अलद्धुअं नो परिदेवइज्जा लद्धुं न विकत्थई स पुज्जो ४.
संथारसिज्जासणभत्तपाणे अपिच्छया अइलाभे वि संते ।
जो एवमप्पाणभितोसइज्जा संतोसपाहन्नरए स पुज्जो ५.

प्राप्योचितं न विकत्थते न श्लाघां करोति, यथाहं महापुण्यवान्, अथवायं देशः शोभनः, यो यतिरेवं पूर्वोक्तं कुर्यात्स पूज्यः. ४. संथारेति—किञ्च यस्य साधोः संस्तारके शय्यायामासने भक्ते पाने चाल्पेच्छता अमूर्च्छया कृत्वा परिभोगादधिकस्य परिहारो वा भवेत्, क सति ? सति संस्तारकादीनां गृहस्थेभ्यः सकाशादतिलाभे सत्यपि, यः साधुरेवमात्मानमभितोषयति, येन वा तेन वात्मानं यापयति, किम्भूतो यतिः? सन्तोषप्राधान्यरतः, सन्तोष एव प्रधानभावे रत आसक्तः, स साधुः पूज्यः ५.

अथन्द्रियसमाधिद्वारेण साधोः पूज्यतामाह—सक्केति-नरेण कण्टका इदं मे भविष्यतीत्याशया सोढुं शक्याः, किम्भूता कण्टकाः ? अयोमया लोहमयाः, किम्भूतेन नरेण ? उत्साहवता, अर्थाथमयता, तथा च कुर्वन्ति केचिल्लोहमयकण्टकास्तर णशयनमप्यर्थाकाङ्क्षया, परं न तु वचनकण्टकाः सोढुं शक्याः, ततो निरीहः सन् कर्णसरान् वाक्कण्टकान् सहेत स पूज्य ६
पुनरतदेव स्पष्टयति—मुहुत्तेति-लोहमयाः कण्टका मुहूर्तदुःखा मुहूर्तमल्पकाल यावत् दुःसहा भवन्ति, वेधकाल एव प्रायो

सक्का सहेउ आसाइ कटया अओमया उच्छहया नरेण ।
अणासए जो उ सहिज्ज कटए वईमए कण्णसरे स पुज्जो ६
मुहुत्तदुक्खा उ हवंति कंटया अओमया ते वि तओ सुउद्धरा ।
वायादुरुत्ताणि दुरुद्धराणि वेराणुबंधीणि महब्भयाणि ७

दुःखदानात्, तेऽपि कण्टकाः शल्यात्सुद्धराः, सुखेनैवोद्ध्रियन्ते, व्रणपरिकर्म च क्रियते परं वचनेन यानि दुरुक्तानि तानि दुरु-द्धराणि भवन्ति, दुःखेनैवोद्ध्रियन्ते, मनोरूपलक्ष्यवेधनात्, किम्भूतानि वचनदुरुक्तानि ? वैरानुबन्धीनि, तथा श्रवणमत्सरादिना इह लोके परलोके च वैरभावजनकानि, पुनः किम्भूतानि ? अत एव महाभयानि कुगतिपातस्यहेतुभूतानि ७

समावयन्तीति–पुनः किञ्च वचनाभिघाताः खरादिवचनप्रहाराः कर्णगताः सन्तः प्रायो दौर्मनस्यं दुष्टमनोभावं प्राणिनां जनयन्ति, अनादिभवाभ्यासात्, किं कुर्वन्तो वचनाभिघाताः ? समापतन्त एकीभावेनाभिमुखं पतन्तः, अथ च यो यतिस्तान् सहते, न तु तैर्विकारमुपदर्शयेत्, कि कृत्वा सहते ? धर्म इति कृत्वा सामायिकपरिणामं समापन्नः सन्, न त्वशक्त्यादिना,

समावयंता वयणाभिधाया कन्नंगया दुम्मणिअं जणंति।
धम्मुत्ति किच्चा परमग्गसूरे जिइंदिए जो सहई स पुज्जो ८.
अवन्नवायं च परम्मुहस्स पच्चक्खओ पडिणीअं च भासं।
ओहारणिं अप्पिअकारणिं च भासं न भासिज्ज सया स पुज्जो ९.

किम्भूतो यतिः ? परमाग्रशूरः प्रधानशूरः, पुनर्जितेन्द्रियः, स पूज्य इति. ८. पुनराह—अवन्नेति–योऽवर्णवादमश्लाघावादं पराङ्मुखस्य पृष्ठतः प्रत्यक्षतश्च नो भाषेत सदा कदाचिदपि नैवं ब्रूयात्, तथा प्रत्यनीकामपकारिणीं त्वं चौर इत्यादिरूपां, तथावधारिणीमशोभन एवायमित्यादिरूपां, पुनरप्रीतिकारिणीं च श्रोतुर्मृतनिवेदनादिरूपां च भाषां वाचं न भाषेत, स यतिः

पूज्यः ९. अलोलुप इति-तथा च साधुरलोलुप आहारादिष्वलुब्धः, पुनरकुहक इन्द्रजालादिकुहकरहितः, पुनरमायी कौटिल्यशून्यः, पुनरपिशुनो न भेदनभेदनकर्ता, पुनरदीनवृत्तिराहारादीनामभावेऽपि शुद्धवृत्तिः, पुनर्यो नो भावयेदकुशलभावनया, परं यथाहमुत्तमो भवतां वर्णनीय, पुनर्यो न भावितात्मा स्वयमन्यपुरतः स्वगुणवर्णनापरः, पुनरकौतुकश्च सदा नटनर्त-

अलोलुए अकुहए अमाई अपिसुणे आवि अदीणवित्ती ।
नो भावए नो विअ भाविअप्पा अकोउहल्ले अ सया स पुज्जो १०
गुणेहिं साहू अगुणेहिं साहू गिण्हाहि साहू गुण मुंचसाहू ।
विआणिआ अप्पगमप्पएण जो रागदोसेहिं समो स पुज्जो ११

क्यादिषु, स पूज्यः १० गुणेहिमिति-किञ्च साधुर्गुणैः पूर्वोक्तगुणैर्विनयादिभिर्युक्तो भवति, तथा असाधुरगुणैः पूर्वोक्तगुणविपरीतैर्भवति, एवं सति च गुणान् साधुगुणान् गृहाण त्वम्, असाधुगुणान् मुञ्चेति शोभन उपदेश, एवमधिकृत्य विज्ञाप यति विविधं आत्मनात्मानमात्मना, पुनर्यो रागद्वेषयोः समो न रागवान् द्वेषवान्, एवंविधो य साधु स पूज्यः ११

तहेवेति–किञ्च साधुरेतान्न हीलयति, कानित्याह–तथैव पूर्ववत्, डहरं वा महल्लकं वा, वाशब्दान्मध्यमं वा, स्त्रियं, पुमांसम्, उपलक्षणत्वान्नपुंसकं वा, प्रव्रजितं वा गृहिणं वा, वाशब्दात्तदन्यतीर्थिकं वा न हीलयति, नापि खिंसयति, तत्र सूयया असूयया वा एकवारं दुष्टाभिधानं हीलनं, तदेव वारंवारं खिंसनं, हीलनाखिंसनयोश्च निमित्तभूतं स्तम्भं च मानं च क्रोधं रोषं त्यजति, स पूज्यः. १२. ज इति–किञ्च ये मानिता अभ्युत्थानादिसत्कारैः सततं निरन्तरं शिष्यान् मानयन्ति श्रुतस्योपदेशं

तहेव डहरं च महल्लगं वा इत्थी पुमं पव्वइअं गिहिं वा ।

नो हीलए नो वि अ खिंसइज्जा थंभं च कोहं च चए स पुज्जो १२.

जे माणिआ सययं माणयंति जत्तेण कन्नं व निवेसयंति ।

ते माणए माणरिहे तवस्सी जिइंदिए सच्चरए स पुज्जो १३.

प्राति चोदनादिभिः, तथा यत्नेन कन्यामिव निवेशयन्ति, यथा मातापितरौ कन्यां गुणैर्वयसा च सर्वासु ऋद्धिषु योग्ये भर्तरि स्थापयतः, एवमाचार्या अपि शिष्यं सूत्रार्थयोर्वेदिनं दृष्ट्वा महति आचार्यपदे स्थापयन्ति, ततस्तानेवंभूतान् गुरून् यो मानयत्यभ्युत्थानादिना, किम्भूतान् गुरून् ? मानयोग्यान् मानार्हान्, स पूज्यः, किम्भूतः शिष्यः ? तपस्वी, पुनः किम्भूतः

जितेन्द्रियः, पुनः किम्भूतः ? सत्यरतः, इदं शिष्यस्य प्राधान्यख्यापनार्थं विशेषणद्वयम् ११ पुनराह—तेसिमिति—यो मेधावी पण्डितः एवंविधः सन् चरति, किं कृत्वा ? गुरूणां तेषां पूर्वोक्तगुणवतां सुभाषितानि श्रुत्वा, किम्भूतानां गुरूणां ? गुणसागराणां गुणानां समुद्राणां, किम्भूतो मुनिः ? पञ्चरतः पञ्चमहाव्रतपालने तत्परः, पुनः किम्भूतो मुनिः ? त्रिगुप्तः, मनोगुप्तिवचनगुप्तिकायगुप्तिसहितः, पुनः किम्भूतो मुनिः ? चतुष्कषायापगतः, क्रोधमानमायालोभाख्यकषायचतुष्टयवर्जितः, स

तेसिं गुरूण गुणसायराण सुच्चा ण मेहावि सुभासिआइं ।
चरे मुणी पचरए तिगुत्तो चउक्कसायावगए स पुज्जो १४
गुरुमिह सययं पडिअरिअ मुणी जिणमयनिउणे अभिगमकुसले ।
धुणिअ रयमलं पुरेकडं भासुरमउलं गइं वइ त्ति बेमि १५
विणयसमाहीए तइओ उद्देसो सम्मत्तो ३

पूज्यः १५ अथ प्रस्तुतफलस्य नाम्ना उपसंहरन्नाह—गुरुमिति—एवंविधो मुनिर्गतिं सिद्धिरूपां प्रगति गच्छति, किं कृत्वा गुरुमाचार्यादिरूपमिह मनुष्यलोके सततं निरन्तरं विधिनाराध्य, किम्भूतो मुनिः ? जिनमतनिपुणः आगमे प्रवीणः, पुनः किम्भूतो मुनिः ? अभिगमकुशलः, लोकप्राघूर्णकादिप्रतिपत्तिदक्षः, किं कृत्वा सिद्धिं याति ? रजोमलं पुराकृतं विधूय, अष्टप्रकारं

कर्म क्षपयित्वेत्यर्थः, किम्भूतां गतिं ? भासुरां ज्ञानतेजोमयीं, पुनः किम्भूतां गतिम्, अतुलाम्, अस्याः सदृश्यन्या गतिर्नास्ति, ब्रवीमीति पूर्ववत्. १९. इति श्रीदशवैकालिके समयसुन्दरविरचितायां शब्दार्थवृत्तौ नवमाध्ययने तृतीय उद्देशकः समाप्तः. ३

सुअमिति–चतुर्थो व्याख्यायते, तत्र सामान्येन य उक्तो विनयस्तस्य विशेषेणोपदर्शनार्थमिदं प्राह–श्रुतं मया हे आयुष्मन् ! तेन भगवता एवमाख्यातमिति, एतद्यथा षड्जीवनिकायां प्रोक्तं तथैव द्रष्टव्यम्, इह क्षेत्रे प्रवचने वा, खलुशब्दो वा

अथ चतुर्थ उद्देशः प्रारभ्यते.

सुअं मे आउसं तेणं भगवया एवमक्खायं, इह खलु थेरेहिं भगवंतेहिं चत्तारि विणयसमाहिट्ठाणा पन्नत्ता, कयरे खलु ते थेरेहिं भगवंतेहिं चत्तारि विणयसमाहिट्ठाणा पन्नत्ता? इमे खलु ते थेरेहिं भगवंतेहिं चत्तारि विणयसमाहिट्ठाणा पन्नत्ता, तं जहा-विणयसमाही; सुअसमाही, तवसमाही, आयारसमाही.

विणए सुए अ तवे आयारे निच्च पंडिआ. १. अभिरामयंति अप्पाणं जे भवंति जिइंदिआ १.

विशेषणार्थः, न केवलमिह, अन्यत्राप्यन्यतीर्थकरप्रवचने स्थविरैर्गणधरैर्भगवद्भिः परमैश्वर्यादियुक्तैश्चत्वारिः विनयसमाधिस्थानानि प्रज्ञप्तानि विनयसमाधिभेदरूपाणि प्ररूपितानि, भगवतः समीपे श्रुत्वा ग्रन्थतो रचितानीत्यर्थः, कतराणि खलु तानीत्यादिप्रश्नः, अमूनि खलु तानीत्युत्तरदानं, तद्यथेत्युदाहरणे, विनयसमाधिः, श्रुतसमाधिः, तपस्समाधिः, आचारसमा-

धिम, तत्र समाधानं समाधि', विनये समाधिर्विनयसमाधि', एवं सर्वेष्वपि द्रष्टव्यम् । उक्तमेव श्लोकेन सङ्गृह्णाति—विणए इति–'विणए इत्यादि सूत्रम्' अस्य व्याख्या–विनये यथोक्तलक्षणे, श्रुतेऽङ्गादौ, तपसि बाह्याभ्यन्तररूपे, आचारे च मूलोत्तरगुणरूपे नित्यं सर्वकालं पण्डिता' सम्यक्परमार्थवेदिनः, किं कुर्वन्तीत्याह–अभिरामयन्त्याभिमुख्येन विनयादिषु युञ्जत आत्मानं जीवं, किमिति, अस्योपादेयत्वात्, क एवं कुर्वन्तीत्याह–ये भवन्ति जितेन्द्रिया जितचक्षुरादिभावशत्रव एव परमार्थ' । अथ विनयसमाधिं कथयितुं वाञ्छन्नाह–चउव्विहेति–चतुर्विध' खलु विनयसमाधिर्भवति, तद्यथेत्युदाहरणो

चउव्विहा खलु विणयसमाही, त जहा-अणुसासिज्जन्तो सुस्सूसइ, सम्मपडिवज्जइ, वयमाराहइ, न य भवइ अत्तसपग्गहिए, चउत्थं पयं भवइ, भवइ अ इत्थ सिलोगो ॥

पेहेइ हिआणुसासणं सुस्सूसई त च पुणो अहिट्ठिए। न य माणमएण मज्जई विणयसमाहिआययट्ठिए, २

पन्यासार्थं, अनुशास्यमानस्तत्र तत्र चोद्यमानः शुश्रूषते, तदनुशासनमर्थितया श्रोतुमिच्छति, इच्छाप्रवृत्तित' सम्यक्सम्प्रतिपद्यते, सम्यगविपरीतमनुशासनं यथाविषयमवबुध्यते, स चैवं विशिष्टप्रवृत्तेरेष वेदमाराधयति, वेद्यतेऽनेनेति वेद श्रुतज्ञानं, तद्यथोक्तानुष्ठानतत्परतया सफलीकरोति, अत एव विशुद्धप्रवृत्तेर्न च भवत्यात्मसम्प्रगृहीत', आत्मैव सम्प्रगृहीत सम्यक्प्रकर्षेण गृहीतो येनाऽऽ विनीत' सुसाधुरित्येवमादिना, तथानात्मोत्कर्षप्रधानत्वाद्विनयादेर्न चैवम्भूतो भवतीत्यभिप्राय',

चतुर्थं पदं भवति, तदेव सूत्रक्रमप्रामाण्यादुत्तरोत्तरगुणापेक्षया चतुर्थमिति, भवति चात्र श्लोकः, अत्रेति विनयसमाधौ, श्लोकश्छन्दोविशेषः. स चायं–'पेहेइ इत्यादि' साधुर्हितानुशासनं प्रार्थयत इच्छति, पुनराचार्यादिभ्य इहलोकपरलोकयोरुपकारिणमुपदेशं शुश्रूषति, धातूनामनेकार्थत्वाद्यथाविषयमवबुद्ध्यते, तच्चावबुद्धः सन् पुनरधितिष्ठति यथावत्करोति, न च कुर्वन्नपि मानमदेन गर्वमदेन माद्यति मदं याति, विनयसमाधौ विनयसमाधिविषये, किंभूतः साधुः ? आयतार्थिको

**चउव्विहा खलु सुअसमाही भवइ, तं जहा--सुअं मे भविस्सइ त्ति अज्झाइअव्वं भवइ, एगग्गचित्तो भविस्सामित्ति अज्झाइअव्वयं भवइ, अप्पाणं ठावइस्सामित्ति अज्झाइअव्वयं भवइ, ठिओ परं ठावइस्सामित्ति अज्झाइअव्वयं भवइ, चउत्थं पयं भवइ, भवइ अ इत्थ सिलोगो ।**

मोक्षार्थीति. २. उक्तो विनयसमाधिः, अथ द्वितीयं श्रुतसमाधिमाह–तत्र 'चउव्विहा इत्यादि सूत्रं' चतुर्विधः खलु श्रुतसमाधिर्भवति. तद्यथा—श्रुतं मे आचारादिद्वादशाङ्गं भविष्यतीत्यनया बुद्ध्याध्येतव्यं भवति, न गौरवाद्यालम्बनेन, तथाध्ययनं कुर्वन्नेकाग्रचित्तो भविष्यामि, न विप्लुतचित्त इत्यध्येतव्यं भवति, अनेन चालम्बनेन. तथाध्ययनं कुर्वन् ज्ञातधर्मतत्त्वोऽहमात्मानं शुद्धधर्मे स्थापयिष्यामि, तथाध्ययनफलात्स्थितः स्वयं धर्मे परं विनेयं स्थापयिष्यामीत्यनेन चालम्बनेन, चतुर्थं पदं

भवति, भवति चात्र श्लोक इति पूर्ववत् स चायं श्लोक'—नाणमिति—अध्ययनतत्परस्य ज्ञान भवति, एकाग्रचित्तश्च तत्परतया एकाग्रालम्बनश्च भवति, स्थित इति विपक्कादर्मे स्थितो भवति,स्थापयति च परमिति स्वय धर्मे स्थितत्वादन्यमपि स्थापयति, श्रुतानि च नानाप्रकाराण्यधीत्य रत' सक्तो भवति श्रुतसमाधाविति सूत्रार्थ' ३ उक्तः श्रुतसमाधि', अथ तप'समाधिमाह—चउव्विहेति—चतुर्विध' खलु तप'समाधिर्भवति, तद्यथेत्युदाहरणे, नेहलोकार्थमिहलोकनिमित्तं लब्ध्यादेर्वाञ्छया तपोऽनशना-

नाणमेगग्गचित्तो अ ठिओ अ ठावई परं। सुआणि अ अहिज्जित्ता रओ सुअसमाहिए ३

चउव्विहा खलु तवसमाही भवइ, तं जहा—नो इहलोगट्ठयाए तवमहिट्ठिज्जा, नो परलोगट्ठयाए तवमहिट्ठिज्जा, नो कित्तिवण्णसद्दसिलोगट्ठयाए तवमहिट्ठिज्जा, नन्नत्थ निज्जरट्ठयाए तवमहिट्ठिज्जा, चउत्थं पयं भवइ, भवइ अ इत्थ सिलोगो।

दिरूप साधुरधितिष्ठेत्कुर्यात्, धम्मिल्लवत्, तथा न परलोकार्थं जन्मान्तरभोगनिमित्तं तपोऽधितिष्ठेद्ब्रह्मदत्तवत्, एवं न कीर्ति वर्णसन्दश्लाघार्थमिति तत्र सर्वदिग्व्यापी साधुवाद' कीर्तिः, एकदिग्व्यापी वर्णः, अर्द्धदिग्व्यापी शब्दः, स्वस्थान एव साधुवाद' श्लोक' श्लाघा वा, नैतन्निमित्तं तपोऽधितिष्ठेत्, अकाम' सन् यथा कर्मनिर्जरैव फलं भवति तथाधितिष्ठेदिति, चतुर्थं पद

भवति भवति चात्र श्लोक इति पूर्ववत्. स चायं-विविध इति-विविधगुणतपोरतो हि नित्यमनशनाद्यपेक्षयानेकगुणं यत्तपस्तद्रत एव सदा भवति निराशो निष्प्रत्याश इहलोकादिषु, निर्जरार्थिकः कर्मनिर्जरार्थी, स एवम्भूतस्तपसा विशुद्धेन धुनोत्यपनयति साधुः पुराणपापं चिरन्तनं कर्म, नवं च न बध्नात्येवं युक्तः सदा तपःसमाधाविति. ४. उक्तस्तपःसमाधिः, अथाचारसमा-

विविहगुणतवोरए निच्चं भवइ निरासए निज्जरट्ठिए। तवसा धुणइ पुराणपावगं जुत्तो सया तवसमाहिए४

चउव्विहा खलु आयारसमाही भवइ, तं जहा—नो इहलोगट्ठयाए आयारमहिट्ठिज्जा नो परलोगट्ठयाए आयारमहिट्ठिज्जा, नो कित्तिवन्नसद्दसिलोगट्ठियाए आयारमट्ठिज्जा नन्नत्थ आरहंतेहिं हेऊहिं आयारमहिट्ठिज्जा, चउत्थं पयं भवइ, भवइ अ इत्थ सिलोगो।

जिणवयणरए अतिंतिणे पडिपुन्नायइ माययट्ठिए। आयारसमाहिसंवुडे भवइ अ दंते भावसंधए ५.

धिमाह—चउव्विहेति—चतुर्विधः खल्वाचारसमाधिर्भवति, तद्यथा—नेहलोकार्थमाचारमधितिष्ठेत्, न परलोकार्थमाचारमधितिष्ठेत्, न कीर्त्तिवर्णशब्दश्लोकनिमित्तमाचारमधितिष्ठेत्, नान्यत्रार्हतैरर्हत्सम्बन्धिभिर्हेतुभिराचारं मूलगुणोत्तरगुणमयमधितिष्ठेन्निरीहः सन् यथा मोक्ष एव भवति, भवति चतुर्थं पदं, भवति चात्र श्लोक इति पूर्ववत्.। स चायं-जिणवयण इत्यादि-

जिनवचनरत आगमे सक्त, अतिन्तिनो नैकवारं किञ्चिदुक्त सन्नसूयया भूयो भूयो वक्ता, प्रतिपूर्ण सूत्रादिना, आयत-मायतार्थिक, अत्यन्तं मोक्षार्थी, आचारसमाधिसंवृत इत्याश्रवद्वारे य समाधिस्तेन स्थगिताश्रवद्वार स भवति, पुन किम्भूत ? दान्त इन्द्रियनोइन्द्रियदमाभ्यां, भावसन्धक, भावो मोक्षस्तत्सन्धक आत्मनो मोक्षासन्नकारीति ५. सर्वसमाधिफलमाह-अभिगमे इति-असौ साधुरात्मन एव न त्वन्यस्य पदं स्थानं क्षेमं शिवं करोति, किं कृत्वा ? चतुर समाधीन

अभिगम चउरो समाहिओ सुविसुद्धो सुसमाहिअप्पओ।
विउलहिअ सुहावह पुणो कुव्वइ अ सोपयखेममप्पणो ६
जाइमरणाओ मुच्चइ इत्थथ च चयइ सव्वसो।
सिद्धे वा हवइ सासए देवे वा अप्परए महिड्ढिए त्ति बेमि ७
चउत्थो उद्देसो संमत्तो ८ विणयसमाही णामज्झयण संमत्त ९

भिगम्य सम्यग्ज्ञात्वा, किम्भूत साधु ? सुविशुद्धो मनोवाक्कायेन, पुन सुसमाहितात्मा सप्तदशविधे संयमे, स एवभूत, किम्भूत पद ? विपुलहितसुखावहं विपुलं विस्तीर्णं हितं तदात्व आयतौ च पथ्यं सुखमावहति प्रापयति यत्तत्तथा ६ एतदेव स्पष्टयति-जाइति असौ साधुर्जातिमरणात्संसारान्मुच्यते, पुन साधुरित्थंस्थ त्यजति, कोऽर्थ ? इदंप्रकारमापन्नमित्थम् इत्थं स्थितमि-

त्यंस्थं नारकादिव्यपदेशबीजं वर्णसंस्थानादि सर्वशः सर्वैः प्रकारैरपुनर्ग्रहणतया, एवं सिद्धो वा कर्मक्षयात्सिद्धो भवति, कीदृशः सिद्धः ? शाश्वतोऽपुनरागामी सावशेषकर्मा देवो वा भवति, किम्भूतो देवः ? अल्परतः कण्डूपरिगतकण्डूयनकल्परतरहितः, महर्द्धिकोऽनुत्तरवैमानिकादिः, ब्रवीमीति पूर्ववत्. ७. इति चतुर्थ उद्देशकः ४. इति श्रीदशवैकालिकशब्दार्थवृत्तौ श्रीसमयसुन्दरोपाध्यायविरचितायां विनयसमाध्यध्ययनं सम्पूर्णम् ९. श्रीरस्तु.

अथ दशमं सभिक्खध्ययनं प्रारभ्यते ।

**निक्खम्म माणाइ अ बुद्धवयणे निच्चं चित्तसमाहिओ हविज्जा ।**
**इत्थीण वसं न आवि गच्छे वंतं नो पडिआयइ जे स भिक्खू १.**

निक्खम्मेति–अथ सभिक्षुनामकमध्ययनमारभ्यते, अस्य चायमभिसम्बन्धः–इह पूर्वाध्ययन आचारप्रणिहितो यथोचितविनयसम्पन्नो भवतीत्येतदुक्तम्, इह त्वेतेष्वेव नवस्वध्ययनेषु व्यवस्थितः स सम्यग्भिक्षुरित्युच्यते, इत्यनेन सम्बन्धेनायातमिदमध्ययनं व्याख्यायते, तच्चेदं–स भिक्षुर्भवेत्, स कः ? यो निष्क्रम्य द्रव्यभावगृहात्प्रव्रज्यां गृहीत्वेत्यर्थः, कया ? आज्ञया, तीर्थकरगणधराणामुपदेशेन, बुद्धवचने तीर्थकरगणधरवचने नित्यं सर्वकालं चित्तेन समाहितोऽतिप्रसन्नो भवेत्, प्रवचन

१ क्वचिदिद पद नास्ति ।

एव अभियुक्त इति गर्भ, अथ व्यतिरेकतः समाधानोपायमाह—पुन स्त्रीणां सर्वासत्कार्यनिबन्धनभूतानां वशं तत्परतन्त्रतारूपं न चापि गच्छेत, तद्वशगो हि नियमतो वान्तं प्रत्यापिबति, अतो बुद्धवचने चित्तसमाधानत सर्वथा स्त्रीवशत्यागात्, अननेनोपायेनान्योपायासम्भवाद्वान्तं परित्यक्त यद्विषयजम्बालं न प्रत्यापिबति न मनागप्याभोगतोऽनाभोगतश्च तत्सेवते १ पृथिवीमिति—तथा साधु पृथ्वीं सचेतनादिरूपां न खनति स्वयं, न च खानयति परैः, एकग्रहणे तज्जातीयानामपि ग्रहणा गनन्तमन्यं न समनुजानातीत्येवं सर्वत्र वेदितव्यम् तथा य साधु सचित्तं पानीयं स्वयं न पिबति, न च पाययति परान्,

पुढविं न खणे न खणावए सीओदगं न पिए न पीआवए।
अगणि सत्थ जहा सुनिसिअं त न जले न जलावए जे स भिक्खू २

तथाग्नि षड्जीवनिकायघातकः किंवत् ? यथा सुनिशितमृज्वाल्तिं शस्त्रं जीवघातकं भवेत्, ततस्तमग्निं य स्वयं न ज्वालयति, परैन ज्वालयति, स इत्थम्भूतो भिक्षुर्भवेत्, ननु षड्जीवनिकायादिष्वध्ययनेषु पूर्वोक्तेषु सर्वत्रायमेवार्थ कथित, किमर्थं पुनरपि सभिक्षुनामाध्ययनेऽपि स एवार्थ प्ररूप्यते ? पुनरुक्तिदोषप्रसङ्गो जायते अथोत्तरमाह—षड्जीवनिकायपालनापर

१ मनुष्यानमीति पठान्तरम् ।

एव भिक्षुरुच्यते, नान्य इति ज्ञापनार्थं, ततो न दोषः २. अनिलेणेति—तथा योऽनिलेन वायुना वायुहेतुना चेलकर्णादिनात्मादि न स्वयं वीजयति, नापि परैर्वीजयति, तथा हरितानि बालतृणादीनि यः स्वयं न छिनत्ति, न च परैश्छेदयति तथा यो बीजानि हरितफलरूपाणि व्रीह्यादीनि सदा सर्वकालं विवर्जयेत्सङ्घट्टनादिक्रियया, तथा यः सचित्तं नाहारयति कदाचिदपि सबले कारणेऽपि, स भिक्षुः ३. अथौद्देशिकादिपरिहारेण त्रसस्थावरपरिहारमाह—वहणमिति—यस्मात्कृतौ-

अनिलेण न वीए न वीयावए हरियाणि न छिंदे न छिंदावए ।
बीआणि सया विवज्जयंतो सच्चित्तं नाहारए जे स भिक्खू ३.
वहणं तसथावराण होइ पुढवीतणकट्ठनिस्सिआणं ।
तम्हा उद्देसिअं न भुंजे नो वि पए न पयावए जे स भिक्खू ४.

देशिकादौ त्रसस्थावराणां, त्रसानां द्वीन्द्रियादीनां, स्थावराणां च पृथिव्यादीनां जीवानां वधनं हननं भवति, किंविशिष्टानां त्रसस्थावराणां ? पृथिवीतृणकाष्ठनिःसृतानां, तथा समारम्भात्, यस्मादेवं तस्मात्कारणादौद्देशिकं कृतादि, अन्यच्च सावद्यं यो न भुङ्क्ते, न केवलमेतत्किन्तु यः स्वयं न पचति, नाप्यन्यैः पाचयति, नाप्यन्यं पाचयन्तं समनुजानाति, स भिक्षुः ४.

रोच्इति—य' साधु' षडपि पृथिव्यादिजीवनिकायानात्मसमान् मन्यते, किं कृत्वा ? ज्ञातपुत्रवचनं रोचयित्वा, ज्ञातपुत्रो महावीरदेवस्तस्य वचन विधिग्रहणासेवनाभ्यां प्रियं कृत्वा, पुनर्य' पञ्चापि महाव्रतानि स्पृशति सेवते, पुनर्य' पञ्चाश्रवसंवृतो भवेत्, स भिक्षु' ५ चत्तारीति—किञ्च य' साधुश्चतुर' क्रोधादीन् कषायान् सदा सर्वकालं वमति त्यजति, पुनर्यो ध्रुवयोगी

रोइअ नायपुत्तवयणे अत्तसमे मन्निज छप्पि काए ।
पंच य फासे महव्वयाइं पंचासवसंवरे जे स भिक्खू ५
चत्तारि वमे सया कसाए धुवजोगी हविज्ज बुद्धवयणे ।
अहणे निज्जायरूवरयए गिहिजोगं परिवज्जए जे स भिक्खू ६
सम्मद्दिट्ठी सया अमूढे अत्थि हु नाणे तवे संजमे अ ।
तवसा धुणइ पुराणपावगं मणवयकायसुसंवुडे जे स भिक्खू ७

भवति, उचितनित्ययोगवान् स्यात्, केन ? बुद्धवचनेन तीर्थंकरवचनेन करणभूतेन, तृतीयार्थे सप्तम्यत्र, किम्भूत' साधु ? अधनश्चतुष्पदादिरहित', पुन' किम्भूतः साधु' ? निर्जातरूपरजत', निर्गतस्वर्णरूप्य इति भाव', पुनर्यो गृहियोगं मूर्छया गृहस्थसम्बन्ध परिवर्जयति, सर्वं प्रकारै' परित्यजति य' स भिक्षु' ६ पुनराह—सम्मद्दिट्ठीति—य' साधु' सम्यग्दृष्टि-

भावसम्यग्दर्शनी, पुनः सदा मूढः सदाविप्लुतः सन्नेवं मन्यते, अस्त्येव ज्ञानं हेयोपादेयविषयमतीन्द्रियेष्वपि, तथा तपश्चास्त्येव बाह्याभ्यन्तरकर्ममलापनयने पानीयसदृशं. तथा संयमश्च नवकर्मानुपादानरूपः. इत्थं च दृढभावो यस्तपसा धुनोति पुराणं पापं भावसारया प्रवृत्त्या, पुनर्यो मनोवचनकायेषु संवृतः, कोऽर्थः ? तिसृभिर्गुप्तिभिर्गुप्तः, स भिक्षुः. ७, तहेति—किञ्च तथैव पूर्वसाधुवत्, अशनं पानकं च पूर्वोक्तस्वरूपं, तथा विविधमनेकप्रकारं खाद्यं स्वाद्यं च पूर्वोक्तस्वरूपमेव, लब्ध्वा प्राप्य, किमित्याह—

तहेव असणं पाणगं वा विविहं खाइमसाइमं लभित्ता।
होही अट्ठो सुए परे वा तं न निहे न निहावए जे स भिक्खू ८.
तहेव असणं पाणगं वा विविहं खाइमसाइमं लभित्ता।
छंदिअ साहम्मिआण भुंजे भुच्चा सज्झायरए जे स भिक्खू ९.

भविष्यत्यर्थः प्रयोजनमनेनेति श्वः[1] परश्वो[2] वेति तदशनादि न निधत्ते न स्थापयति स्वयं, तथा न निधापयति न स्थापयत्यन्यैः तथा स्थापयन्तमन्यं नानुजानाति यः सर्वथा सन्निधिपरित्यागवान् स भिक्षुः. ८. तहेवेति—किञ्च तथैव यः साधुरशनं पानं च विविधं खाद्यं स्वाद्यञ्च लब्ध्वेत्यादि व्याख्या पूर्ववत्. लब्ध्वा किमित्याह—छन्दित्वा निमन्त्र्य समानधार्मिकान्, भुङ्क्ते स्वा-

समुत्पन्नादारसन्यसिद्धे, भुक्त्वा च स्वाध्यायरतश्च भवेत्, चशब्दाच्छेपानुष्ठानपरश्च स्यात्, स भिक्षु ९ अथ भिक्षुलक्षणा धिकार एवाह—नेति—य साधुर्वैग्रहिकीं कलहप्रतिबद्धां कथां न कथयति, पुनर्य सद्वादकथादिष्वपि न कुप्यति परस्य, अपि तु यो निभृतेन्द्रियोऽनुद्धतेन्द्रियो भवेत्, पुनर्य प्रशान्तो रागादिरहित एवास्ते, तथा संयमे पूर्वोक्तस्वरूपे ध्रुव सर्वकालं योगेन कायवाङ्मन कर्मलक्षणेन युक्त प्रतिभेदमौचित्येन प्रवृत्त, तथा य उपशान्तोऽनाकुल कायचापलादिरहित, पुनर्याऽविहेठको

न य वुग्गहिअं कहं कहिज्जा न य कुप्पे निहुइंदिए पसंते।
संजमधुवजोगजुत्ते उवसंते अविहेडए जे स भिक्खू १०

जो सहइ हु गामकंटए अक्कोसपहारतज्जणाओ अ।
भयभेरवसद्दसप्पहासे समसुहदुक्खसहे अ जे स भिक्खू ११

न कंचिदुचितेऽनादरवान्, न क्रोधादीनां विक्षेपक इत्यन्ये, इत्थम्भूत स भिक्षु १० ज इति—किञ्च य साधु सम्यग्ग्रामक-ण्टकान् सहते, ग्रामा इन्द्रियाणि, तेषां दुःखहेतव कण्टकास्तान्, स्वरूपत एवाह—आक्रोशान् प्रहारांस्तर्जनाश्चेति, तत्र आक्रोशा जकारादिभिः, प्रहारा कशादिभि, तर्जना असूयादिभि, तथा भैरवभया अत्यन्तरौद्रभयजनका शब्दा सप्रहासा यस्मिन्

स्थान इति गम्यते, तथा तस्मिन्, वेतालादिकृतार्त्तनादाट्टहास इत्यर्थः, अत्रोपसर्गेषु सत्सु समसुखदुःखसहश्च योऽचलितसमःताभावः स भिक्षुः. ११. एतदेव स्पष्टयति—पडिममिति—यः साधुः श्मशाने प्रतिमां मासादिरूपां प्रतिपद्य विधिनाङ्गीकृत्य न बिभेति, न भयं प्राप्नोति, किं कृत्वा ? भैरवभयानि दृष्ट्वा, रौद्रभयहेतूनुपलभ्य वेतालादिशब्दादीनि, किम्भूतः साधुः ? विविधगुणतपोरतश्च, नित्यं मूलोत्तरगुणेष्वनशनादितपसि च सक्तः सर्वकालं न शरीरमभिकाङ्क्षते, निस्पृहतया वार्त्तमानिकं

पडिमं पडिवज्जिआ मसाणे नो भीयए भयभेरवाइं दिअस्स ।
विविहगुणतवोरए अ निच्चं न सरीरं चाभिकंखए जे स भिक्खू १२.

असइं वोसट्ठचत्तदेहे अकुट्ठे व हए लूसिए वा ।
पुढविसमे मुणी हविज्जा अनिआणे अकोउहल्ले जे स भिक्खू १३.

भावि च, य इत्थम्भूतः स भिक्षुः १२. पुनराह—असइमिति—यो मुनिः पृथिवीसमो भवेत्, पृथिवीवत्सर्वसहः स्यात्, न पुना रागादिना पीड्यते, किम्भूतो मुनिः ? असकृद्व्युत्सृष्टत्यक्तदेहः, असकृत्सर्वदा व्युत्सृष्टो भावप्रतिबन्धाभावेन त्यक्तो विभूषाया अकरणेन देहः शरीरं येन स तथाविधः, पुनराक्रुष्टो वा जकारादिना, हतो वा दण्डादिना, लूषितो वा खड्गादिना,

भक्षितो वा शृगालादिना किम्भूतो मुनिः ? अनिदानो भाविफलस्य वाञ्छारहितः पुनरकुतूहलश्च नटादिषु य एवम्भूत स भिक्षुः १३ भिक्षुस्वरूपाभिधानाधिकार एवाह—अभिभूयेति—यो मुनिः कायेन शरीरेण न मनोवचनाभ्यामेव सिद्धान्तनीत्या परीषहानभिभूय पराजित्यात्मानं जातिपथात्संसारमार्गात्समुद्धरत्युत्सारयति, किं कृत्वा ? जातिमरणं संसारमूलं विदित्वा, किम्भूतं जातिमरणं ? महाभयं महाभयकारणं, किम्भूतो मुनिः ? तपसि रतः, तपःकरणतत्परः, किम्भूते तपसि ? श्रामण्ये

अभिभूअ काएण परीसहाइ समुद्धरे जाइपहाउ अप्पय ।
विइत्तु जाईमरणं महब्भय तवे रए सामणिए जे स भिक्खू १४
हत्थसजए पायसजए वायसजए संजइंदिए ।
अज्झप्परए सुसमाहिअप्पा सुत्तत्थ च विआणइ जे स भिक्खू १५

श्रमणानां सम्बन्धिनि शुद्धे, स भिक्षुः १४ पुनराह—हत्थेति—यः साधुर्हस्तसंयतः पादसंयतः इति कारणं विना कूर्मवल्लीन आस्ते, कारणे च सम्यग्गच्छति, तथा यो वाक्संयतोऽकुशलवचननिरोधात्, कुशलवचनस्य चोदीरणेन, किम्भूतः साधुः ? संयतेन्द्रियो निवृत्तविषयप्रसरः पुनः किम्भूतः साधुः ? अध्यात्मरतः प्रशस्तध्यानासक्तः, पुनः किम्भूतः साधुः ?

सुसमाहितात्मा, ध्यानापादकगुणेषु सुतरां स्थापितात्मा, पुनर्यः सूत्रार्थं यथावस्थितं विधिग्रहणशुद्धं विजानाति, एवम्भूतः स भिक्षुः. १५. पुनराह–उवहिम्मीति–यः साधुरज्ञातोञ्छं चरति, भावशुद्धं स्तोकं स्तोकमित्यर्थः, स भिक्षुः. किम्भूतः साधुः ? उपधौ वस्त्रादिलक्षणेऽमूर्च्छितस्तद्विषयमोहत्यागेन, पुनः किम्भूतः साधुः ? अगृद्धः प्रतिबन्धाभावेन पुलकः, पुल समुच्छ्रये, पुलतीति पुलकः, चारित्रगृद्धत्वात्समुच्छ्रितः, पुनः किम्भूतः साधुः ? निष्पुलाकः, संयमस्यासारतोत्पादका ये दोषास्तै

उवहिंमि अमुच्छिए अगिद्धे अन्नायउंछं पुलनिप्पुलाए ।
कयविक्कयसंनिहिओ विरए सव्वसंगावगए अ जे स भिक्खू १६.
अलोलभिक्खू न रसेसु गिज्झे उंछं चरे जीविअनाभिकंखी ।
इड्ढिं च सक्कारणपूअणं च चए ठिअप्पा अणिहे जे स भिक्खू १७.

रहितः, पुनः किम्भूतः साधुः ? क्रयविक्रयसन्निधिभ्यो विरतः, द्रव्यभावभेदभिन्नक्रयाविक्रयपर्युषितस्थापनेभ्यो निवृत्तः, पुनः किम्भूतः साधुः ? सर्वद्रव्यभावसङ्गरहितः १६. अलोलेति—पुनः किञ्च यो भिक्षुरुञ्छं चरति, भावोञ्छं सेवत इति पूर्ववत्, नवरं तत्रोपधिमाश्रित्योक्तम्, इह त्वाहारमाश्रित्येति न पुनरुक्तिदोषः, तथा यो जीवितमसंयमजीवितं नाभिकाङ्क्षते न वाञ्छति,

य मर्दि चामर्पोपच्यादिरूपां, तथा सत्कार चस्त्रादिभि', तथा पूजनं च सयादिना त्यजति, नैतदर्थमेव यतते, स्थितात्मा ज्ञानादिषु, पुनः किम्भूतो भिक्षुः ? अनिभो मायारहित', पुन' किम्भूतो भिक्षुः ? अलोलोऽप्राप्तमार्थनातत्परो न, पुनर्यो रसेषु न गृद्धो न प्रतिबद्ध', स भिक्षुर्भवति, नेति—तथा यः परं, स्वपक्षशिष्येभ्यो व्यतिरिक्तमयं कुशील इति न वदति, तद्वचने चाप्रीतिदोष उत्पद्यते स्वपक्षशिष्य तु शिक्षाग्रहणबुद्ध्या वदत्यपि, पुनर्येनान्य' कश्चित्कुप्यति, न तथो भवीति दोपसद्भावेऽपि,

न परं वइज्जासि अयं कुसीले जेण च कुप्पिज्ज न तं वइज्जा ।
जाणिअ पत्तेअं पुण्णपावं अत्ताणं न समुक्कसे जे स भिक्खू १८
न जाइमत्ते न य रूवमत्ते न लाभमत्ते न सुएण मत्ते ।
मयाणि सव्वाणि विवज्जइत्ता धम्मज्झाणरए जे स भिक्खू १९

किमित्याह—ज्ञात्वा प्रत्येकं पुण्यपापं नान्यसम्बन्ध्यन्यस्य भवति, अग्निदाहवेदनावत्, एवं सत्स्वपि गुणेष्वात्मानं यो न समुत्कर्षयति, न स्वगुणैर्गर्वमायाति स भिक्षु' १८ अथ मदप्रतिषेधार्थमाह—नजाईति—य' साधुर्जातिमत्तो न भवति, यथाहं ब्राह्मण', पुनर्यो रूपमत्तो न भवति यथाहं रूपवानादेयः पुनर्यो लाभमत्तो न भवति यथाहं लाभवान्, पुनर्यो न श्रुतमत्तो

भवति यथाहं पण्डितः, अनेन कुलमदादिपरिग्रहः, तदेवाह–मदान् सर्वान्[1] कुलादिविषयान् विवर्ज्य परित्यज्य धर्मध्यानरतो भवेत्स भिक्षुः. १९. पवेअये इति–यो महामुनिरार्यपदं शुद्धधर्मपदं परोपकाराय प्रवेदयति कथयति, पुनर्यो धर्मे स्थितः परमपि श्रोतारं धर्मे स्थापयति, पुनर्यो निष्क्रम्य गृहान्निःसृत्य कुशीललिङ्गमारम्भादिना कुशीलचेष्टितं वर्जयति, पुनर्यो हास्य-

पवेअए अज्जपयं महामुणी धम्मे ठिओ ठावयई परं पि ।
निक्खम्म वज्जिज्ज कुसीललिंगं न आवि हासं कुहए जे स भिक्खू २०.
तं देहवासं असुइं असासयं सया चए निच्चहिअट्ठिअप्पा ।
छिंदित्तु जाईमरणस्स बंधणं उवेइ भिक्खू आपुणागमं गइं ति बेमि २१.

सभिक्खुअज्झयणं दसम सम्मत्तं १०.

कुहको न भवति, हास्यकारिकुहकयुक्तो न स्यात्, स भिक्षुः. २०. अथ भिक्षुभावस्य फलमाह—तमिति–भिक्षुरेवंविधो गतिं सिद्धिगतिमुपैति, गच्छति किम्भूतां गतिम् ? अपुनरागमां पुनर्जन्मादिरहितां, किं कृत्वा ? जातिजरामरणस्य बन्धनं छित्त्वा,

१ सर्वानपीति पाठान्तरम् ।

पुनर्भिक्षुर्देहवासं सदा त्यजति ममतात्यागेनैतं प्रत्यक्षेणोपलभ्यमानं, किम्भूतं देहवासम् ? अशुचिं, शुक्रशोणितमयत्वात्, पुन किम्भूतं देहवासम् ? अशाश्वतं प्रतिक्षणं क्षीयमाणत्वात्, किम्भूतो भिक्षु ? नित्यहिते मोक्षसाधने सम्यग्दर्शनादौ स्थितात्मा अत्यन्तं सुस्थित , इति ब्रवीमीति पूर्ववत् २१ इति श्रीदशवैकालिकशब्दार्थवृत्तौ सभिक्षुनामकं दशममध्ययनं समाप्तम् १० श्रीरस्तु इहेति–व्याख्यातं सभिक्षुनामकं दशममध्ययनम्, अथ चूडाख्यमारभ्यते, अस्य चायमभिसम्बन्ध–पूर्वाध्ययने भिक्षुगुणा

अथ प्रथम चूलिका प्रारभ्यते

इह खलु भो पव्वइएण उप्पन्नदुक्खेणं संजमे अरइसमावन्नचित्तेण ओहाणुप्पेहिणा अणोहाइएण चेव हयरस्सिगयकुसपोयपडागाभूआइ इमाइं अट्ठारस ठाणाइं सम्मं सपडिलेहिअव्वाइं भवति

उक्ता, स च भिक्षुरेवंभूतोऽपि कदाचित्कर्मपरवशात्कर्मबलाच्च सीदेत्तस्य भिक्षो स्थिरीकरणं कर्तव्यं, तदर्थं चूडाद्वयं कथ्यते— इह खलु भो प्रव्रजितेन साधुना, इह खलु प्रवचने निश्चयेन भो इति आमन्त्रणे, अमूनि वक्ष्यमाणान्यष्टादश स्थानानि सम्य क्प्रकारेण सम्यक्सुपेक्षितव्यानि सुष्ठ्वालोचनीयानि भवन्तीत्युक्ति , किम्भूतान्यष्टादशस्थानानि ? हयरश्मिगजाङ्कुशपोतपताका भूतानि, अश्वस्थिनगजाङ्कुशबोहित्थसितपटतुल्यानि, अयं परमार्थ–यथा हयादीनामुन्मार्गप्रवृत्तौ वाञ्छता रश्म्यादयो निय

१ पढम चूलिके, इति पाठान्तरम् ।

मनहेतवस्तथैतान्यपि संयमादुन्मार्गप्रवृत्तिं वाञ्छतां भव्यजीवानामपि नियमनहेतवः, यतश्चैवमतः सम्यक्प्रत्युपेक्षितव्यानि भवन्ति किम्भूतेन साधुना ? उत्पन्नदुःखेन, सञ्जातशीतादिशारीरस्त्रीनिषद्यादिमानसदुःखेन, पुनः किम्भूतेन ? संयमे पूर्ववर्णितस्वरूपेऽरतिसमापन्नचित्तेनोद्वेगगताभिप्रायेण संयमान्निर्विण्णभावेनेत्यर्थः, पुनः किम्भूतेन ? अवधानोत्प्रेक्षिणा, अवधानमपसरणं संयमादुत्प्राबल्येन प्रेक्षितुं शीलं यस्य स तेनावधानोत्प्रेक्षिणोत्प्रव्रजितुकामेनेत्यर्थः, पुनः किम्भूतेन ? अनवधावितेनैव, अनुत्प्रव्रजितेनैव. तमिति–तत्र प्रथमं स्थानकमाह–तद्यथेत्युदाहरणे, हं भो दुःखमायां दुष्प्रजीविन इति, हं भो शिष्यामन्त्रणे, दुःखमायामधमकालरूपायां कालदोषादेव दुःखेन कृच्छ्रेण प्रकर्षेणोदारभोगापेक्षया जीवितुं शीला दुष्प्रजीविनः, प्राणिन इति गम्यते,

**तं जहा-हं भो दुस्समाइं दुप्पजीवी १. लहुसगा इत्तरिआ गिहिणं कामभोगा २. भुज्जो अ सायबहुला-**

नरेन्द्रादीनामप्यनेकदुःखप्रयोगदर्शनात्, उदारभोगरहितेन विटम्बनाप्रायेण[1] कुगतिहेतुना किं गृहाश्रमेणेति सम्प्रत्युपेक्षितव्यमिति प्रथमं स्थानम्. १. अथ द्वितीयस्थानमाह—तथा लघव इत्वरा गृहिणां कामभोगाः, दुःखमायामिति वर्तते, सन्तोऽपि लघवास्तुच्छाः प्रकृत्यैव तुषमुष्टिवदसारा इत्वरा अल्पकाला गृहिणां गृहस्थानां कामभोगा मदनकामप्रधानाः शब्दादयो विषया विपाककटवश्च न देवानामिव विपरीताः, अतः किं गृहाश्रमेणेति सम्प्रत्युपेक्षितव्यमिति द्वितीयं स्थानम्. अथ तृतीयस्थानमाह–तथा भूयश्च शातबहुला मनुष्याः, भुक्तेष्वपि कामभोगेषु पुनरपि सुखाभिलाषिण एव मनुष्याः, अतः किं कामभोगैः सम्प्रत्युपेक्षितव्य-

१ विडम्बनेति युक्तः पाठः ।

मिति तृतीयं स्थानम् ३ अथ चतुर्थस्थानमाह—तथेदं न मे दुःखं न चिरकालोपस्थायि भविष्यति, इदं चानुभूयमानं मम भामण्यमननुपालयतो दुःखं शारीरमानसं कर्मफलं परीषहजनितं चिरकालमुपस्थायुं क्षीणं न भविष्यति, श्रामण्यपालनेन परीषहनिराकरणात्कर्मनिर्जरणात्संयमराज्यस्य प्राप्तिः, इतरथा महानरकादौ विपर्ययः, अतः किं गृहाश्रमेणेति सम्प्रत्युपेक्षितव्यमिति चतुर्थं स्थानम् अथ पञ्चमस्थानमाह—'ओमजणपुरक्कार इति' न्यूनजनपूजा, प्रव्रजितो हि धर्मप्रभावाद्राजामात्या

मणुस्सा ३ इमे अ मे दुक्खे न चिरकालोवट्ठाई भविस्सइ ४

ओमजणपुरक्कारे ५ वंतस्स य पडिआयण ६

दिभिरभ्युत्थानासनाञ्जलिप्रग्रहादिभिः पूज्यते, उत्प्रव्रजितेन तु न्यूनजनस्यापि स्वव्यसनगुप्तयेऽभ्युत्थानादि कार्यम्, अधार्मिकराजविषये वा वेष्टिभयात्कुत्सितकर्मणो नियमत एवैव चेदमधर्मफलम्, अतः किं गृहाश्रमेणेति सम्प्रत्युपेक्षितव्यमिति पञ्चमं स्थानम् एवं सर्वत्र योजनीयम् ५ अथ षष्ठं स्थानमाह—वान्तस्य प्रत्यापानं भुक्तोज्झितपरिभोग इत्यर्थः, अयं च भृगालादिक्षुद्रप्राणिभिराचरितः सतां निन्द्यः, पुनर्व्याधिदुःखजनकः, वान्ताश्च भोगाः प्रव्रज्याङ्गीकरणेन, एतत्प्रत्यापानमेव

भूतमेवं चिन्तनीयामिति षष्ठं स्थानम्. ६. अथ सप्तमस्थानमाह—तथाधोगतिवासोपसम्पत्, अधोगतिर्नरकगतिस्तिर्यग्गतिर्वा, तस्यां वसनमधोगतिवासः, एतन्निमित्तभूतं कर्म गृह्यते, तस्योपसम्पत्, सामीप्येनाङ्गीकरणं यदेतदुत्प्रव्रजनमेवं चिन्तनीयमिति सप्तमं स्थानम्. ७. अथाष्टमं स्थानमाह—भो इत्यामन्त्रणे, गृहिणां गृहस्थानां धर्मः परमनिर्वृतिजनको दुर्लभ एव, किं कुर्वतां गृहिणां ? गृहपाशमध्ये वसताम्, अत्र गृहशब्देन पाशकल्पाः पुत्रकलत्रादयो गृह्यन्ते, तन्मध्ये वसतामनादिभवाभ्यासादकारणं स्नेहबन्धनमेतच्चिन्तनीयमित्यष्टमं स्थानम्. ८. अथ नवमस्थानमाह—तथा आतङ्कः सद्योघाती विषूचिकादिरोगः,

अहरगइवासोवसंपया ७. दुल्लहे खलु भो गिहीणं धम्मे गिहिवासमज्झे वसंताणं ८.
आयंके से वहाय होइ ९. संकप्पे से वहाय होइ १० सोवक्केसे गिहवासे, निरुवक्केसे परिआए ११.

से इति तस्य गृहिणो धर्मबन्धुरहितस्य वधाय विनाशाय भवति, तथाविधवधश्चानेकवधहेतुरेवं चिन्तनीयमिति नवमं स्थानम्. ९. अथ दशमं स्थानमाह—तथा संकल्प इष्टानिष्टविप्रयोगप्राप्तेर्यो मनःसम्बन्ध्यातङ्कः स तस्य गृहिणस्तथाचेष्टायोगान्मिथ्याविकल्पाभ्यासेन प्रग्रहादिप्राप्तेर्वधाय भवत्येतच्चिन्तनीयामिति दशमं स्थानम्. १०. अथैकादशं स्थानमाह—गृहवासो गृहाश्रमः सोपक्लेशः, सह उपक्लेशेन वर्तते यः स सोपक्लेशः, उपक्लेशाः कृषिपाशुपाल्यवाणिज्याद्यनुष्ठानगताः पण्डित-

जनगर्हिता' शीताप्णभमादयो धृतएषणचिन्तादयश्चेत्येवं चिन्तनीयमित्येकादशं स्थानम् ११ अथ द्वादश स्थानमाह—पयाय पभिरियाप्रक्षे रहित', दीक्षापर्यायोऽनारंभी चिन्तापरिवर्जित श्लाघनीयो विदुषामिति चिन्तनीयमिति द्वादशं स्थानम् १२ अथ त्रयोदश स्थानमाह—तथा बन्धो गृहवास', सदा तद्धेत्वनुष्ठानात्कोशकारकीटवदित्येव चिन्तनीयमिति त्रयोदशं स्थानम् १३ अथ चतुर्दशं स्थानमाह—तथा पर्यायो मोक्षो निरन्तर कर्मनिगडानामपगमनेन मुक्तवदित्येव

बन्धे गिहवासे, मुक्खे परिआए १२ सावज्जे गिहवासे, अणवज्जे परिआए १३ बहुसाहारणा गिहीण कामभोगा १४ पत्तेअ पुन्नपाव १५ अणिच्चे खलु भो मणुयाण जीविए कुसग्गजलबिंदुचचले १६ बहु च खलु भो पाव कम्म पगड १७ पावाण च खलु भो कडाण कम्माणं पुव्विं दुच्चिन्नाण दुप्पडिकंताण

चिन्तनीयमिति चतुर्दश स्थानम् १४ अथ पञ्चदशं स्थानमाह—अत एव गृहवास' सावद्य' सपाप' प्राणातिपातमृषावादादीनां पञ्चानामाश्रवाणां सेवनादिति चिन्तनीयमिति पञ्चदश स्थानम् १५ अथ षोडश स्थानमाह—पर्याय प्रथमनवद्योऽपापोऽहिंसादिपालनात्मकत्वादेतच्चिन्तनीयमिति षोडशं स्थानम् १६ अथ सप्तदश स्थानमाह—बहुसाधारणा गृहिणां कामभोगा इति, गृहिणां गृहस्थानां कामभोगा' साधारणाश्चोरराजकुलादिसामान्याः, एवंयदेतच्चिन्तनीयमिति सप्तदशं

स्थानम्. १७. अथाष्टादशं स्थानमाह—तथा प्रत्येकं पुण्यपापमिति. मातापितृकलत्रादिनिमित्तमप्यनुष्ठितं पुण्यपापं प्रत्येकं पृथक्पृथग्येनानुष्ठितं तस्य कर्तुरेव तदिति भावार्थः, एवमष्टादशं स्थानम्. १८. 'भवइ अ इत्थ सिलोगो' भवति चात्र श्लोकः, अत्रेत्यष्टादशस्थानानां सम्बन्धे, उक्तानुक्तसङ्ग्रहपर इत्यर्थः, श्लोक इति च जातिपरो निर्देशस्ततश्च श्लोकजातिरनेकभेदा भवतीति प्रभूतश्लोकोपन्यासेऽपि न विरोधः. जयेति—यदा चैवमष्टादशसु स्थानेषु व्यावर्त्तनकारणेषु सत्स्वपि यो

वेइत्ता मुक्खो नत्थि अवेइत्ता तव सा वा झोसइत्ता १८. अट्ठारसमं पयं भवइ, भवइ अ इत्थ सिलोगो।

जया य चयई धम्मं अणज्जो भोगकारणा। से तत्थ मुच्छिए बाले आयइं नावबुज्झइ १.

जया ओहाविओ होइ इंदो वा पडिओ छमं। सव्वधम्मपरिब्भट्ठो स पच्छा परितप्पई २.

बालोऽज्ञो धर्मं चारित्रलक्षणं जहाति त्यजाति, स आयतिमागामिकालं नावबुद्ध्यते, सम्यग्नावगच्छाति, किम्भूतो बालः ? अनार्य इव, अनार्यो म्लेच्छचेष्टितः, किमर्थं धर्मं त्यजतीत्याह—भोगकारणाय शब्दादिभोगनिमित्तं, किम्भूतो बालः ? तत्र मूर्छितः, तेषु भोगेषु मूर्च्छितो गृद्धः. १. एतदेव दर्शयाति—जयेति—यदा चावधावितोऽपसृतो भवति यः, कोऽर्थः संयमसुखविभूतेः सकाशादुत्प्रव्रजित इत्यर्थः, तदा इन्द्रो वा देवराज इव क्ष्मां पतितः, स्वविमानविभवभ्रंशेन भूमौ पतित इति भावः.

किम्भूतो य ? संयमधर्मपरिभ्रष्टः, संयमधर्मेभ्यः क्षान्त्यादिभ्यः आसेवितेभ्योऽपि यावज्जीवमननुपालनात्, लौकिकेभ्यो वा, गौरवादिभ्यः परिभ्रष्टः सर्वतश्च्युतः, पतितो भूत्वा पश्चान्मनाग्मोहस्यान्ते स परितप्यते, किमिदं मया कार्यं कृतमित्यनुतापं करोति २ जयेति–यदा च यः संयमवान् सन् नरेन्द्रादीनां वन्द्यो भवति, स पश्चादुन्निष्क्रान्तः संयमरहितः सन् अवन्द्यो भवति, पश्चात्स परितप्यते च, किंवत् ? स्थानच्युता सती इन्द्रवर्जा देवतेव, परितापार्थः पूर्ववत् ३ जयेति–यदा च

जया अ वंदिमो होइ पच्छा होइ अवंदिमो । देवया व चुआ ठाणा स पच्छा परितप्पइ ३

जया अ पूइमो होइ पच्छा होइ अपूइमो । राया व रज्जपब्भट्ठो स पच्छा परितप्पइ ४

जया अ माणिमो होइ पच्छा होइ अमाणिमो । सिट्ठिव्व कब्बडे छूढो स पच्छा परितप्पइ ५

पूज्यो भवति लोकानां वस्त्रपात्रादिभिः, कुतः ? साधुधर्ममाहात्म्यात्, स उत्प्रव्रजितः सन्नपूज्यो भवति लोकानामेव, क इव ? राज्य (प्र) भ्रष्टो महतो भोगादियुक्तो राजेवापूज्यो भवति, पुनः पश्चात्सपरितप्यते च पूर्ववत् ४ जयेति–यदा च मान्यो भवत्यभ्युत्थानाज्ञाकरणादिना माननीयः स्याच्छीलादिप्रभावेन, पश्चाच्छीलादिपरित्यागेनामान्यः स्यात्, किंवत् ? श्रेष्ठीव श्रेष्ठीव, यथा श्रेष्ठी कर्बटे क्षिप्तो महाक्षुद्रसन्निवेशे क्षिप्तोऽमान्यो भवति, पुनः पश्चात्परितप्यते, तद्वच्छीलादिपरि-

त्याग्यपि. ५. जयेति—यदा च स्थविरो भवति मुक्तसंयमो वयसः परिणामेन, एतद्विशेषप्रदर्शनायाह—किम्भूतः स्थविरः ?
समतिक्रान्तयौवन एकान्तस्थविरभावः, तदा भोगानां विपाककटुकत्वात्परितप्यते, क इव ? मत्स्य इव, यथा मत्स्यो बडिशं
गिलित्वाभिगृह्य तथाविधकर्मलोहकण्टकविद्धः सन् पश्चात्परितप्यत इति, एतदपि पूर्वेण समानम्. ६. एतदेव स्पष्टयति—
जयेति—यदा च कुकुटुम्बस्य कुत्सितकुटुम्बस्य कुतप्तिभिः कुत्सितचिन्ताभिरात्मनः सन्तापकारिणीभिर्विहन्यते विषयभोगान्

जया अ थेरओ होइ समइक्कंतजुव्वणो । मच्छुव्व गलिं गलित्ता स पच्छा परितप्पइ ६.

जया अ कुकुटुंबस्स कुतत्तीहिं विहम्मइ । हत्थीव बंधणे बद्धो स पच्छा परितप्पइ ७.

पुत्तदारपरीकिन्नो मोहसंताणसंतओ । पंकोसन्नो जहा नागो स पच्छा परितप्पइ ८.

अज्ज आहं गणी हुंतो भाविअप्पा बहुस्सुओ । जइ हं रमंतो परिआए सामन्ने जिणदेसिए ९.

प्रति विघातं नीयते, तदा स मुक्तसंयमः सन् परितप्यते पश्चात्, क इव ? यथा हस्ती कुकुटुम्बबन्धनबद्धः परितप्यते. ७.
पुनराह—पुत्तेति—मुक्तसंयमः पश्चात्परितप्यते, हा हा किं मयेदमसमञ्जसमनुष्ठितं, किम्भूतः ? पुत्रदारपरिकीर्णः, विषयसे-
वनात्पुत्रकलत्रादिभिः सर्वतो विक्षिप्तः पुनः किम्भूतः ? मोहसन्तानसन्ततो दर्शनमोहनीयादिकर्मप्रवाहेण सन्तप्तः, क इव
परितप्यते ? यथा नागो हस्ती पङ्कावसन्नः कर्दममग्नः सन् परितप्यते. ८. कश्चित्सचेतनो नर एवं च परितप्यत इत्याह—

अमेति—अहमद्य तावदस्मिन् दिवसे गणी स्यामाचार्यो भवेय, यदि पर्याये प्रव्रज्यारूपेऽरमिष्य रतिमकरिष्यम्, किंविशिष्टे पर्याये ? श्रामण्ये श्रमणसम्बन्धिनि, पुन किम्भूते ? जिनदेशिते तीर्थकरप्ररूपिते, न शाक्यादिरूपे, किम्भूतोऽहं ? भावितात्मा, प्रशस्तयोगभावनाभिर्भावित आत्मा यस्य स, पुन किम्भूत ? बहुश्रुतः, उभयलोकहितबह्वागमयुक्त इति ९ अवधानोत्प्रेक्षिण स्थिरीकरणार्थमाह–देवेति–महर्षीणां सुसाधूनां पर्याये संयमे रतानामासक्तानां, पर्यायो देवलोकसमान,

देवलोगसमाणो अ परिआओ महेसिण । रयाण अरयाण च महानयरसारिसो १०

अमरोवम जाणिअ सुक्खमुत्तम रयाण परिआइ तहारयाण ।
निरओवम जाणिअ दुक्खमुत्तम रमिज्ज तम्हा परिआइ पडिए ११

अयमर्थ–यथा देवलोके देवा नाटकादिव्यापृता सन्तोऽदीनमनसस्तिष्ठन्ति, तथा सुसाधवोऽपि ततोऽधिकभावत प्रत्युपेक्षणादिक्रियाव्यापृता अदीनमनसस्तिष्ठन्ति, कथम् ? उपादेयविशेषत्वात्प्रत्युपेक्षणादे, तथा पर्यायेऽरतानाञ्च भावत सामाचार्यामसक्तानां, सशब्दादिविषयाभिलाषिणाञ्च, भगवद्भिरूपितव्यक्तानां क्षुद्रप्राणिनो पर्यायो महानरकसदृशो रौरवादितुल्य, तत्कारणत्वान्मानसदु खातिरेकात्, तथा विडम्बनात्वेति १० एतच्चोपसंहारेणैव निगमयन्नाह—अमरेति—पण्डित

शास्त्रज्ञः पर्याय उक्तरूपे संयमे रमेत सक्तिं कुर्यात्, किं कृत्वा ? अमरोपमं देवसदृशं सौख्यं प्रशमसौख्यं प्रशस्तं ज्ञात्वा विज्ञाय, केषामित्याह—पर्याये रतानां दीक्षायां सक्तानां, सम्यक्प्रत्युपेक्षणादिक्रियाद्यङ्गे, पुनः किं कृत्वा ? पर्याय एवारतानां नरकोपमं नरकतुल्यमुत्तमं प्रधानं दुःखं च ज्ञात्वा. ११. अथ चारित्रभ्रष्टस्येहलोकसम्बन्धिदोषमाह—धम्मेति–कुशीलास्तत्सङ्गोचिता लोका एनमुन्निष्क्रान्तं हीलयन्ति पतितस्त्वमिति पङ्क्तितोऽपसारणादिना कदर्थयन्ति, किम्भू-

धम्माउ भट्ठं सिरिओ ववेयं जन्नग्गि विज्झाअमिवप्पतेअं ।
हीलंति णं दुव्विहिअं कुसीला दाढुड्ढिअं घोरविसं व नागं १२.
इहेव धम्मो अयसो अकित्ती दुन्नामधिज्जं च पिहुज्जणंमि ।
चुअस्स धम्माउ अहम्मसेविणो संभिन्नचित्तस्स य हिट्ठओ गइ १३.

तमेनं ? धर्मात्साधुधर्माद्भ्रष्टं च्युतं, पुनः किम्भूतमेनं ? श्रिया अपेतं लक्ष्म्या वर्जितं, कमिव हीलयन्ति ? यज्ञाग्निमग्निष्टोमाद्यनलं, विध्यातमिव यागप्रान्ते, अल्पतेजसम्, अल्पशब्दस्याभाववाचित्वात्, तेजःशून्यं भस्मसदृशमित्यर्थः, किम्भूतमेनं ? दुर्विहितम्, उन्निष्क्रमणादेव दुष्टानुष्ठायिनं, पुनः कमिव हीलयन्ति ? उद्धृतदंष्ट्रमुत्खातदाढं घोरविषमिव रौद्रविषमिव नागं सर्पम्. १२. एवमस्य भ्रष्टशीलस्य सामान्यत इहलोकसम्बन्धिनं दोषं कथयित्वेहलोकपरलोकसंम्बन्धिनं दोषमाह–इहेवेति—

धमाच्च्युतस्य धर्मावुत्क्रमजितस्यैतानि भवन्ति, कानीत्याह—इह लोके एषोऽधर्मा भवति अयमधर्म इति, पुनरयशोऽपराक्रमेण कृतं न्यूनत्वं भवति तथाऽकीर्तिर्दानपुण्यफलाभावादरूपा तथा दुर्नामधेयं च कुत्सितनामधेयं भवति, केत्याह—पृथग्जने सामान्यलोकेऽपि आस्तां विशिष्टलोके, किंविशिष्टस्य ? धर्माच्च्युतस्य अधर्मसेविनः कलत्रादीनां निमित्तं षड्जीवनिकायस्योपमर्दकारिणः पुनः किंविशिष्टस्य ? सम्भिन्नवृत्तस्य खण्डितचारित्रस्य क्लिष्टकर्मबन्धादधस्ताद्गतिर्नरकेषूपपातो भवति १३

मुंजित्तु भोगाइ पसज्झचेअसा तहाविहं कट्टु असंजमं बहुं ।
गइं च गच्छे अणिहिज्झिअं दुहं बोही अ से नो सुलहा पुणो पुणो १४

अथास्यैवोत्प्रव्रजितस्य विशेषतः कष्टमाह—भुक्त्वेति—स उत्प्रव्रजित एवंविधां गतिं गच्छति, किं कृत्वा ? भोगान् भुक्त्वा, केन ? प्रसह्यचेतसा धर्मनिरपेक्षतया प्रकटेन चित्तेन, पुनः किं कृत्वा ? तथाविधमज्ञानोचितफलं बहुमसन्तोषाद्भूतमसंयमं कृष्याद्यारम्भरूपं कृत्वा किम्भूतां गतिम् ? अनभिध्यातामनिष्टां, पुनर्दुःखां प्रकृत्यैवासुन्दरां, दुःखजननीं पुनरस्योत्प्रव्रजितस्य बोधिर्जिनधर्मप्राप्तिर्न सुलभा भवेत्, पुनःपुनः प्रभूतेष्वपि जन्मसु दुर्लभा एव स्यात् कथं ? प्रवचनविराधकत्वात् १४

यस्मादेवं तस्मादुत्पन्नदुःखोऽप्येतदनुचिन्त्य नोत्प्रव्रजेदित्याह—इमस्सेति—एतच्चिन्तनेन साधुना नोत्प्रव्राजितव्यम्, एतत्किमित्याह—अस्य तावदित्यात्मनिर्देशे, आत्मनो नारकस्य जन्तोर्नरकप्राप्तस्य पल्योपमं सागरोपमं च क्षीयते, यथाकर्मप्रत्ययं पूर्णं भवति. किमङ्ग पुनर्ममेदं संयमारातिनिष्पन्नं मनोदुःखं तथाविधप्रबलक्लेशवृत्तिरहितमेतत्क्षीयित एव, किम्भूतस्यास्य जन्तोः ? दुःखोपनीतस्य सामीप्येन प्राप्तदुःखक्लेशवृत्तेरेकान्तक्लेशचेष्टितस्य. १८. विशेषेणैतदेवाह—नेति—मे मम

इमस्स ता नेरइअस्स जंतुणो दुहोवणीअस्स किलेसवत्तिणो ।
पलिओवमं छिज्जइ सागरोवमं किमंग पुण मज्झ इमं मणोदुहं १५.
न मे चिरं दुक्खमिणं भविस्सइ असासया भोगपिवास जंतुणो ।
न चे सरीरेण इमेणविस्सई अविस्सई जीविअपज्जवेण मे १६.

चिरं प्रभूतकालमिदं दुःखं संयमविषयेऽरतिलक्षणं न भविष्यति, किमितीत्याह—प्रायो यौवनकालावस्थायिनी भोगपिपासा विषयतृष्णा जन्तोः प्राणिनोऽशाश्वती, अशाश्वतीत्व एव कारणान्तरमाह—न चेच्छरीरेणानेन विषयतृष्णा अपयास्यति, यदि शरीरेणानेन कारणभूतेन वृद्धस्यापि सतो विषयेच्छा नापयास्यति, तथापि किमाकुलत्वं ? यतोऽपयास्यति जीवितस्या-

पगमेन मरणेनेस्येर्य निश्चितं स्यात् १६ अथास्यैव साधो: फलमाह—जस्सेति—इन्द्रियाणि चक्षुरादीनि तं पूर्वोक्त तादृशं धर्मे निश्चितं साधु संयमस्थानात्र प्रचालयन्ति न प्रकम्पयन्ति, दृष्टान्तमाह— के कमिव ? यथोत्पातवाता: सुदर्शन गिरि मेरुपर्वतं न कम्पयन्ति तं साधु कं ? यस्य साधोरेवमुक्तप्रकारेणात्मैव निश्चिता दृढ स कथंचिदपि उत्पन्ने देहं त्यजेत, पर न तु शासन न पुनर्धर्माज्ञाम १७ अथोपसंहारमाह—इच्चेवेति—बुद्धिमान्नर: सम्यग्बुद्ध्या सहितो मानव कायेन वाचा

जस्सेवमप्पा उ हविज्ज निच्छिओ चइज्ज देहं न हु धम्मसासणं ।

तं तारिसं नो पइलंति इंदिआ उविंति वाया व सुदंसणं गिरिं १७

इच्चेव संपस्सिअ बुद्धिमं नरो आयं उवायं विविहं विआणिआ ।

काएण वाया अदु माणसेण तिगुत्तिगुत्तो जिणवयणमहिट्ठिज्जासि त्ति बेमि १८

रइवक्का पढमा चूला सम्मत्ता ॥ १ ॥

वचनेनाथ मनसा त्रिभिरपि करणैर्यथाप्रवृत्तैस्त्रिगुप्तिभिर्गुप्त:[1] सन जिनवचनं तीर्थंकरस्योपदेशमधितिष्ठेत, यथाशक्ति तदुक्तक्रियापालने तत्परो भूयात्, भावार्थसिद्धौ तत्त्वतो मुक्तिसिद्धे:, किं कृत्वा ? इत्येवमध्ययने कथितं दुष्प्रजीवित्वादि सम्प्रेक्ष्या-दित आरभ्य यथावद् दृष्ट्वा, पुन: किं कृत्वा ? आय-सम्यग्ज्ञानादेर्लाभमुपायं च ज्ञानाभिसाधनप्रकारं विविधमनेकप्रकारं

१ त्रिगुप्तिगुप्त इति पाठान्तरम् ।

ज्ञात्वा, ब्रवीमीति पूर्ववत्. १८. इति श्रीदशवैकालिकशब्दार्थवृत्तौ श्रीसमयसुन्दरोपाध्यायविरचितायां प्रथमचूलिका समाप्ता. १. श्रीरस्तु. चूलिअमिति—व्याख्याता प्रथमचूलिका. अथ द्वितीयाऽऽरभ्यते—पूर्वचूलिकायां सीदतः साधोः स्थिरीकरणमुक्तम्, इह त्ववसरप्राप्ता विविक्ता चर्या उच्यत इत्ययं सम्बन्धः, अहं चूलिकां प्रवक्ष्यामि, तुशब्दविशेषितां भाव-चूडां प्रकर्षेणावसरप्राप्ताभिधानलक्षणेन कथयिष्यामि, किम्भूतां चूलिकां ? श्रुतं श्रुतज्ञानं, चूडा हि श्रुतज्ञानं वर्त्तते, कारणे कार्यस्योपचारात्, एतच्च केवलिना भाषितम्, अनन्तर एव केवलिना प्ररूपितमिति विशेषणं सफलं, यत एवं वृद्धवादः

अथ द्वितीया चूलिका.

**चूलिअं तु पवक्खामि सुअं केवलिभासिअं । जं सुणित्तु सुपुण्णाणं धम्मे उप्पज्जए मई १.**

श्रूयते, कयाचिदार्ययाऽसहिष्णुः कूरगडुकप्रायः साधुश्चातुर्मासकादावुपवासं कारितः, स तदाराधनया मृतः, मृते च तस्मिन् साध्व्या ज्ञातम्, अहमृषिघातिका जाता, तत उद्विग्ना सती तीर्थकरं पृच्छामीति जातबुद्धिस्ततस्तस्या गुणावर्जितया देवतया साध्वी सीमन्धरस्वामिसमीपे मुक्ता, तया च भगवानालोचनामाश्रित्य पृष्टः, भगवानाह—त्वं तु न दुष्टचित्ता ततोऽघातिका, ततो भगवता चूलाद्वयं तस्यै दत्तं, देवतया च ततः स्वस्थानमानीता साध्वी, अत इदमेव

विशेष्यते, तत् श्रुत्वाकर्ण्य सपुण्यानां कुशलानुबन्धिपुण्ययुक्तानां प्राणिनामचिन्त्यचिन्तामणिकल्पे धर्मं चारित्रधर्मे मतिरुत्पद्यते भावत श्रद्धा जायते, अनेन चारित्र चारित्रबीजं चोपजायत इति एतदुक्तं भवति १ एतद्धि प्रतिज्ञामूलम्, इह चाध्ययन मर्यादया अभिधेयास्तस्य प्रवृत्तौ मूलपादभूतमिदमाह—अणुसोअ इति—एवंविधेन साधुनात्मा जीव प्रतिस्रोत एव दुरपाकरणीयमप्यपाकृत्य विषयादिसंयमलक्ष्याभिमुखमेव दातव्य प्रवर्तितव्य, न क्षुद्रचरितान्युदाहरणीकृत्यासन्मार्गप्रवण ततोऽपि कर्तव्यम्, अपि त्वागमैकप्रवणेनैव भवितव्य, किम्भूतेन साधुना ? भवितुकामेन संसारसमुद्रपरिहारेण

अणुसोअपट्ठिअबहुजणम्मि पडिसोअलद्धलक्खेण । पडिसोअमेव अप्पा दायव्वो होउकामेण २

अणुसोअसुहो लोओ पडिसोओ आसवो सुविहिआण । अणुसोओ संसारो पडिसोओ तस्स उत्तारो ३

मुक्ततया भवितुकामेन, पुन किम्भूतेन साधुना ? प्रतिस्रोतोलब्धलक्षेण द्रव्यतस्तस्यामेव नद्यां कथञ्चिद्देवतासान्निध्यात्प्रतीपस्रोत भावलक्षेण, भावतस्तु विषयादिविपरीत्यात्कथञ्चित्प्राप्तसंयमलक्षेण, क्व सति ? बहुजने तथाविधाद्भ्यासात्प्रभूतलोके अनुस्रोत प्रस्थिते सति नदीपूरप्रवाहपतितकाष्ठवत्, विषयकुमार्गद्रव्यक्रियानुकूल्येन प्रवृत्ते सति तथाप्रस्थानेनोदधिगामिनि सति २ अधिकृतमेव स्पष्टयन्नाह—अणुसोअ इति—अनुस्रोत सुखो लोक उदकनिम्नाभिसर्पणवत्, कथ ? यतो लोक प्रवृत्त्या-

नुकूलविषयादिसुखो गुरुकर्मत्वात्, अथ प्रतिस्रोत एतस्माद्विपरीतः आश्रव इन्द्रियजयादिरूपः परमार्थपेशलः कायवाङ्मनो-व्यापारः आश्रमो वा व्रतग्रहणादिरूपः, सुविहितानां साधूनां, अथोभयफलमाह—अनुस्रोतः संसारः शब्दादिविषयानुकूल्यं संसार एव, कारणे कार्योपचारात्, यथा विषं मृत्युः,दधित्रपुसी प्रत्यक्षो ज्वरः, प्रतिस्रोत उक्तलक्षणः, तस्येति पञ्चम्यर्थे षष्ठी, सुपां सुपो भवन्तीति वचनात्, तस्मात्संसारादुत्तारः,उत्तरणमुत्तारः,हेतौ फलोपचारात्,यथायुर्घृतं, तन्दुलान् वर्षति पर्जन्यः३.

तम्हा आयारपरक्कमेणं संवरसमाहिबहुलेणं ।
चारिआ गुणा अ नियमा अ हुंति साहूण दट्ठव्वा ४.

तम्हेति—यस्मादेतदेवं पूर्वोक्तं तस्मात्साधुनैवंविधेनाप्रतिपाताय विशुद्धये च साधूनां चर्या भिक्षुभावसाधना बाह्याऽनियत-वासादिरूपा, गुणाश्च मूलगुणोत्तरगुणा नियमाश्चोत्तरगुणादीनामेव पिण्डविशुद्ध्यादीनां स्वकालासेवननियोगा द्रष्टव्या भवन्ति, एते चर्यादयः साधूनां द्रष्टव्या भवन्ति, सम्यग्ज्ञानासेवनप्ररूपणारूपेण, किम्भूतेन साधुना ? आचारपराक्रमेण, आचारे ज्ञानादौ पराक्रमः प्रवृत्तिर्बलं यस्य स तेन, पुनः किम्भूतेन साधुना ? संवरसमाधिबहुलेन, संवर इन्द्रियादिविषये समाधिरना-

कुलत्वं यद्भूतं प्रभूतं यस्य स संवरसमाधिबहुलस्तेन ४ अथ चर्यामाह—अनिएअ इति—ऋषीणामेवम्भूता, विहारचर्या विहरणस्थितिर्विहारमर्यादा प्रशस्ता भवति व्याक्षेपस्याभावात्, आज्ञापालनेन भावचारित्रपालनाच्च पवित्रा, एवम्भूता कथ मित्याह—अनियतवासो मासकल्पादिना, अनिकेतवासो वा अगृह उद्यानादौ वास:, तथा समुदानचर्याऽनेकत्र याचितभिक्षा-

अनिएअ वासो समुआण चरिआ अन्नायउछ पयरिक्कया अ।
अप्पोवही कलहविवज्जणा अ विहारचरिआ इसिण पसत्था ५
आइन्नओ माणविवज्जणा अ ओसन्नदिट्ठाहडभत्तपाणे।
संसट्ठकप्पेण चरिज्ज भिक्खू तज्जायसंसट्ठ जई जइज्जा ६

चरण, तथाज्ञाते उञ्छ विशुद्धोपकरणग्रहणविषयं, प्रतिरिक्तता च विजनैकान्तसेविता चाल्पोपधित्वमनुल्वणस्तोकोपधिसे वित्व, कलहविवर्जना च, तद्वासिजनभण्डनविवर्जनं भयगकथादिनापि वर्जनमित्यर्थ, विहारचर्या ऋषीणां प्रशस्ता इत्यु क्तम ५ अथ तद्विशेषस्योपदर्शनायाह—आइन्नेति—आकीर्णावमानविवर्जना च विहारचर्या ऋषीणां प्रशस्तेति. आकीर्णत्रा

वमानविवर्जना च विहारचर्या ऋषीणां प्रशस्ता, तत्राकीर्णं राजकुलसङ्खडयादि, अवमानं स्वपक्षपरपक्षप्राभृत्यजं लोकावं-हुमानादि, अस्य विवर्जनम्, आकीर्णे हस्तपादादिलूषणदोषो भवेत्, अवमानेऽलाभाधाकर्मादिदोषो भवेत्, तथोत्सन्नदृष्टाहृतं प्राय उपलब्धमुपनीतम्, उत्सन्नशब्दः प्रायोवृत्तौ वर्तते, यथा देवा ओसन्नं सायं वेयणं वयंति, किमेतदित्याह—भक्तपानमोदनारनालादि, इदं चोत्सन्नदृष्टाहृतं यत्रोपयोगः शुद्धयति, त्रिगृहान्तरादारत इत्यर्थः, एवम्भूतमुत्सन्नदृष्टाहृतं भक्तपानमृषीणां

अमज्जमंसासि अमच्छरीआ । अभिक्खणं निव्विगइं गया अ ।

अभिक्खणं काउसग्गकारी सज्झायजोगे पयओ हविज्जा ७.

प्रशस्तमिति योगः. तथा भिक्षुः साधुः संसृष्टकल्पेन हस्तमात्रकादिसंसृष्टविधिना चरेदित्युपदेशः, अन्यथा पुरःकर्मादिदोषः स्यात्, संसृष्टमेव विशिनष्टि, तज्जातसंसृष्ट इति, आमगोरसादिसमानजातीयसंसृष्टे मात्रकादौ यतिर्यतेत यत्नं कुर्यात्, अतज्जातसंसृष्टे सम्मार्जनादिदोषः स्यादित्यनेनाष्टभङ्गसूचनं, तद्यथा—'संसट्ठे हत्थे संसट्ठे मत्ते सावसेसे दव्वे.' अत्र प्रथमो भङ्गः श्रेयान्, शेषाः स्वयं चिन्त्याः. ६. उपदेशाधिकार एवेदमाह—अमज्जेति—साधुरमद्यमांसाशी भवेदित्युक्तिः, कोऽर्थः ? अमद्य-

पाग्मांसाशी च स्यात्, एते च मद्यमांसे लोकागमप्रसिद्धे एव, ततश्च यत्केचन कथयन्ति–आरनालादिष्वपि सन्धानदोषादो- ष्टनाद्यपि मद्यत्वस्यात्याज्यमिति, तदसत् अमीषां मांसमद्यत्वस्यायोगात्, लोकशास्त्रयोरप्रसिद्धत्वात्, सन्धानमात्रस्य तत्तुल्य- त्वेऽप्यदनं त्वसाध्वतिप्रसङ्गदोषात्, स्त्रीत्वतुल्यतया मृग्यपानमातृगमनादिप्रसङ्गादित्यलं प्रसङ्गेन, अक्षरगमनिकामात्रप्र- क्रमात् पुन साधुरमत्सरी च स्यात्, न परसम्पदाद्वेषी स्यात्, तथाभीक्ष्णं वारंवारं पुष्टकारणस्याभावे निर्विकृतिकश्च

ण पडिन्नविज्जा सयणासणाइं सिज्जं निसिज्जं तह भत्तपाणं ।
गामे कुले वा नगरे व देसे ममत्तभावं न कहिंपि कुज्जा ८

निर्गतविकृतिपरिभोगश्च भवेत्, अनेन परिभोगोचितविकृतीनामप्यकारणे प्रतिषेधमाह, तथाभीक्ष्णं वारंवार गमना- गमनादिषु विकृतिपरिभोगे सत्यन्ये, किमित्याह–कायोत्सर्गकारी भवेत्, ईर्यापथप्रतिक्रमणमकृत्वा न किञ्चिदन्यत्कुर्यात्, तद- शुद्धतापत्तेरिति भाव तथा स्वाध्यायपयोग पावनादीनामुपचारव्यापारे आचामाम्लादौ प्रयतोऽतिशयेन यत्नवान् भवेत्, तस्यैव तस्य सफलत्वात्, विपर्यये गून्मादादिदोषप्रसङ्गादिति ॥ णेति–किञ्च साधुर्मासादिकल्पसमाप्तावन्यत्र गच्छन् सन्निविं

गृहस्थं न प्रतिज्ञापयेन्न प्रतिज्ञां कारयेत्, इतीति किं ? पुनरागतस्य ममैतानि दातव्यानि, एतानि कानीत्याह—शयनं संस्तारकादि, आसनं पीठकादि, शय्या वसतिः, निषद्या स्वाध्यायादिभूमिः, तथा तेन प्रकारेण तत्कालेऽवस्थाया औचित्येन भक्तं खण्डखाद्यादि, पानं च द्राक्षादि न प्रतिज्ञापयेन्ममत्वदोषात्, अथ सर्वत्र ममतादोषपरिहारमाह—ग्रामे शालिग्रामादौ, कुले वा श्रावककुले, नगरेऽयोध्यादौ, देशे च मध्यदेशादौ ममेदमिति ममत्वभावं स्नेहमोहं न क्वचिदुपकरणादिष्वपि कुर्यात्, कुतो

गिहिणो वेआवडिअं न कुज्जा अभिवायणवंदणपूअणं वा ।
असंकिलिट्ठेहिं समं वसिज्जा मुणी चारित्तस्सजओ न हाणी ९.

न स्नेहं कुर्यात् ? स्नेहमूलत्वाद्दुःखादीनामिति. ८. पुनरुपदेशाधिकार एवमाह—गिहिण इति–मुनिर्गृहिणो गृहस्थस्य वैयावृत्यं गृहिभावस्योपकाराय तत्कर्मस्वात्मनो व्यापृतभावं न कुर्यात्, स्वपरोभयाश्रेयःसमायोजनदोषात्, अभिवादनं वाचा नमस्काररूपं, वंदनं कायप्रणामलक्षणं, पूजनं वा वस्त्रादिभिः समभ्यर्चनं गृहिणो न कुर्यादुक्तदोषप्रसङ्गादेव, तथैतद्दोषपरिहाराय एवमसङ्क्लिष्टैर्गृहिवैयावृत्यादिकारणसङ्क्लेशरहितैः साधुभिः समं वसेन्मुनिः, यतो येभ्यः साधुभ्यः सकाशाच्चारित्रस्य मूलगु-

णादिलक्षणस्य हानिर्न स्यात्, ९ अथासङ्क्लिष्टैः समं वसेदित्युक्तं, पुनर्विधिविशेषमाह—णेति-साधु कालदोषाद्यदि कथं
चिन्निपुणं संयमानुष्ठानकुशलं सहायं परलोकसाधन द्वितीयं न लभेत, किम्भूत सहाय ? गुणाधिकं वा ज्ञानादिगुणैरधिक वा
गुणैः समं वा, वाशब्दाद्गुणहीनमपि जात्यकाञ्चनकल्पं विनीतं वा, तदा किं कुर्यादित्याह-तदेकोऽपि संहननादियुक्तः पापानि
पापकारणान्यसदनुष्ठानानि विवर्जयन, विविधमनेकैः प्रकारैः सूत्रोक्तैः परिहरन् सन् विहरेदुचितविहारेण, किं कुर्वन् ? कामे

ण या लभेज्जा निउणं सहायं गुणाहिअं वा गुणओ समं वा ।
इक्कोवि पावाइ विवज्जयंतो विहरिज्ज कामेसु असज्जमाणो १०

ष्विच्छाकामादिष्वसजमान सङ्गमगच्छन्नेकोऽपि विहरेत्, पर न तु पार्श्वस्थादिपापमित्रसङ्गं कुर्यात्तस्य दुष्टत्वात्, तथान्यैर
प्युक्त—"वर विहर्तुं सह पन्नगैर्भयङ्करैरथवा रिपुभिः सहोषितुम् । अधर्मयुक्तैश्च परैरपण्डितैर्न पापमित्रैः सह वर्त्तितु
नमम १ वरं हि सन्त्पुभुजगा हि रोषिता भृतासयश्छिद्रमवेक्ष्य चारय । असत्प्रवृत्तेन जनेन सङ्गतः परत्र चैवेह विहन्यते
जनः २ तथा--परस्परविरुद्धानि कुमार्ग दूरतस्त्यजेत् । आत्मानं योऽतिसन्धत्ते सोऽन्यस्मै स्यात्कथं हितः ३ तथा—

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। महान्ति पातकान्याहुरेभिश्च सह सङ्गतम्४. इत्यलं प्रसङ्गेन. १०. अथ सूत्रार्थावसरः— संवत्सरमिति—साधोः संवत्सरं वर्षासु चातुर्मासिकं ज्येष्ठावग्रहं विहारकालमाह—द्वितीयं नैकत्र क्षेत्रे वसेदपिशब्दान्मासमपि परं प्रमाणमृतुबद्धकाले द्वितीयं, तत्र क्षेत्रे न वसेत्, यत्रैको वर्षाकल्पः कृतस्तत्रोत्कृष्टतो द्वितीयो वर्षाकल्पो न कार्यः, एवं मासकल्पोऽपि द्वितीय एकक्षेत्रे उत्सर्गतो न कार्य ऋतुबद्धे काले, कुतः ? गृहस्थादिसङ्गदोषात्, द्वितीयं तृतीयं वा वर्षं मासं

संवच्छरं वावि परं पमाणं बीअं च वासं न तहिं वसिज्जा ।
सुत्तस्स मग्गेण चरिज्ज भिक्खू सुत्तस्स अत्थो जह आणवेइ ११.

वा परिहृत्य तत्र क्षेत्रे वसेदपि, किं बहुना ? सर्वत्रैव सूत्रमार्गेण चरेद्भिक्षुरागमादेशे वर्तेतेति भावः. तथापि न ओघत एव यथाश्रुतग्राही स्यात्, अपि तु सूत्रस्यार्थः पूर्वापराविरोधितन्त्रयुक्तिघटितः पारमार्थिकोत्सर्गापवादगर्भो यथाज्ञापयति नियुङ्क्ते तथा वर्तेत नान्यथा, यथेहापवादतो नित्यवासेऽपि वसतावेव प्रतिमासादि साधूनां संस्तारगोचरादि परिवर्तेत नान्यथा शुद्धापवादायोगादित्येवं वन्दनप्रतिक्रमणादिष्वपि तदर्थं प्रत्युपेक्षणेनानुष्ठानेन वर्तेत, न तु तथाविधलोकेहायातं परित्यजेत्,

आशातनामसद्गात् ११ एवं विशुद्धविविक्तचर्यायतोऽसीदनगुणोपायमाह—ज इति—य' साधुर्भवेत्स पूर्वरात्रापररात्रकाले रात्रौ प्रथमचरममहरयोरित्यर्थ', सम्प्रेक्षते सूक्ष्मोपयोगनीत्यात्मानं कर्मभूतमात्मनैव करणभूतेन प्रेक्षते, कथं प्रेक्षत इत्याह—किं म कृतमिति, छान्दसिकत्वात्तृतीयार्थे षष्ठी, किं मया कृतं शक्तेरनुरूपं तपश्चरणादियोगस्य, किञ्च मम कृत्यशेषं कर्तव्याच्छेषं

जो पुव्वरत्तावररत्तकाले संपिक्खई अप्पगमप्पगेण ।
किं मे कड किच्चमकिच्चसेसं किं सकणिज्ज न समायरामि १२.
किं मे परो पासइ किंच अप्पा किं वाह खलिअं न विवज्जयामि ।
इच्चेव सम्मं अणुपासमाणो अणागयं नो पडिबंध कुज्जा १३

मुनित, पुन' किञ्च शक्यं वयोऽवस्थानुरूपं वैयावृत्त्यादि न समाचरामीति, तस्याकरणे हि तत्कालनाश इति १२ किमिति तथा किं मम स्खलितं पर' स्वपक्षपरपक्षलक्षण' पश्यति ? किं वात्मा कश्चिन्मनाक्संवेग प्राप्त' ? किं वाहमोघत एव स्खलितं न विवर्जयामीत्येवं सम्यगनुपश्यन्ननेन प्रकारेण स्खलितं ज्ञात्वागमोक्तेन विधिना भूय' प्रत्युत्पन्नागतं न प्रतिबन्धं कुर्यात्साधु',

य आगामिकालविषयं नासंयमप्रतिबन्धं करोतीति. १३. कथमित्याह—जत्थेवेति—साधुर्यत्रैव क्वचित्संयमस्थानावसरे धर्मोपधिप्रत्युपेक्षणादौ दुष्प्रयुक्तं दुर्व्यवस्थितमात्मानमिति गम्यते, पश्येत्पश्यत्युक्तवत्परमात्मदर्शनद्वारेण, केनेत्याह—कायेन, वाचा, अथ मानसेन. मन एव मानसं, करणत्रयेणेत्यर्थः, तत्रैव तस्मिन्नेव संयमस्थाने धीरो बुद्धिमान् प्रतिसंहरेत्प्रतिसंहरति,

जत्थेव पासे कइ दुप्पउत्तं काएण वाया अदु माणसेणं ।
तत्थेव धीरो पडिसाहरिज्जा आइन्नओ खिप्पमिव क्खलीणं १४.
जस्सेरिसा जोग जिइंदिअस्स धिईमओ सप्पुरिसस्स निच्चं ।
तमाहु लोए पडिबुद्धजीवी सो जीअई संजमजीविएणं १५.

यः स्वात्मानं सम्यग्विधि प्रतिपद्यत इत्यर्थः, अत्र दृष्टान्तमाह–यथा जवादिभिर्गुणैराकीर्णो व्याप्तो जात्योऽश्व इति गम्यते, असाधारणविशेषणात्, तच्चेदं—क्षिप्रमिव खलिनं शीघ्रं, कविकमिव, यथा जात्योऽश्वो नियमितगमननिमित्तं शीघ्रं खलिनं प्रतिपद्यत एवं यो दुष्प्रयोगत्यागेन खलिनकल्पं सम्यग्विधि, एतावतांशेन दृष्टान्तः. १४. यः पूर्वरात्रेत्याद्यधिकारोपसंहारा-

याह—जस्सेरिसा—जस्सेति—विभक्तिव्यत्ययात् यस्यैते—अनन्तरोदिताः ...

याह—जस्सरति—विग्रासत्तं साधुमेवभूत लोके प्राणिसघाते नित्य सर्वकाल सामायिकप्रतिपत्तेरारभ्यामरणं प्रतिबुद्धजीविनमाहु कथयन्ति कोऽथ ? प्रतिबुद्धजीविनं प्रमादरहितजीवितशीलं, स एवंगुणयुक्त' सन् जीवति संयमजीवितेन कुशलाभिसंधिभावात्सर्वथा संयमप्रधानजीवितेन, त साधु क ? यस्य साधोरीदृशा' स्वहितालोचनप्रवृत्तिरूपा योगा मनोवाक्कायव्यापारा

अप्पा खलु सय(पर)रक्खिअव्वो सव्विंदिएहिं सुसमाहिएहिं ।
आरक्खिओ जाइपहं उवेई सुरक्खिओ सव्वदुहाण मुच्चइ त्ति बेमि १६

विवित्तचरिआ चूला सम्मत्ता २

॥ दसवेआलिअं सुत्त सम्मत्तं शुभम्

भवन्ति, किम्भूतस्य साधो' ? जितेन्द्रियस्य वशीकृतस्पर्शनादीन्द्रियसमूहस्य, पुन' किंभूतस्य यस्य ? धृतिमत' संयमे धैयसहितस्य, पुन' किम्भूतस्य यस्य ? सत्पुरुषस्य प्रमादजयान्महापुरुषस्य १५ अथ शास्त्रमुपसंहरन्नुपदेशसर्वस्वमाह—अप्पेति सर्वविधेन साधुनात्मा, खलुशब्दो विशेषणार्थ', शक्तौ सत्यां परोऽपि सततं सर्वकालं रक्षितव्य' पालनीय', परलोकसम्बन्धि

कष्टम्, कथमित्युपायमाह—यतः किम्भूतेन साधुना ? सर्वेन्द्रियैः स्पर्शनादिभिः सुसमाहितेन निवृत्तविषयव्यापारेण, अरक्षण-रक्षणयोः फलमाह—अरक्षितः सन्नात्मा पन्थानं जन्ममार्गं संसारमुपैति सामीप्येन गच्छति, अथ सुरक्षितः पुनरात्मा यथागमम-प्रमादेन सुष्ठु रक्षितः सन् सर्वदुःखेभ्यः शारीरमानसेभ्यो विमुच्यते, विविधमनेकैः प्रकारैरपुनर्ग्रहणपरमस्वास्थ्यापादनलक्षणै-र्मुच्यते विमुच्यते, ब्रवीमीति पूर्ववत्. १६.

॥ इति चूलिकाद्वयं व्याख्यातम् ॥ श्रीरस्तु ॥

अथ प्रशस्तिमाह—हरिभद्रकृता टीका वर्तते विषमा परम् । मया तु शीघ्रबोधाय शिष्यार्थं सुगमा कृता. १. चंद्रकुले श्रीखरतर-गच्छे जिनचन्द्रसूरिनामानः । जाता युगप्रधानास्तच्छिष्यः सकलचन्द्रगणिः. २. तच्छिष्यसमयसुन्दर-गणिना च स्तम्भतीर्थपुरे चक्रे । दशवैकालिकटीका शशिनिधिशृङ्गारमितवर्षे. ३. अर्थस्यानवबोधेन मतिमान्द्यान्मतिभ्रमात् । जिनाज्ञा-विपरीतं यत्तन्मिथ्यादुष्कृतं मम. ४. ममोपरि कृपां कृत्वा शोधयन्तु बुधा इमाम् । परोपकरणे यस्मात्तत्परा उत्तमा नराः. ५. टीकाकरणतः पुण्यं यन्मयोपार्जितं भवेत् । तेनाहमिदमिच्छामि बोधिरत्र परत्र मे. ६. शब्दार्थवृत्तिटीकायाः श्लोकमान-मिदं स्मृतम् । सहस्रत्रयमग्रे च पुनः सार्धचतुःशतम्. ७. इति श्रीदशवैकालिकशब्दार्थवृत्तिप्रशस्तिः सम्पूर्णा.

अथ दीपिकोपसंहार—अत्र श्रीदशवैकालिककारकशय्यंभवसूरेस्तत्पुत्रमनकमुनेश्च सम्बन्धसूचकं द्रुमपुष्पिकाध्ययननिर्युक्तिगाथाद्विकं यथा—सेज्जंभवं गणहरं जिणपडिमादंसणेण पडिबुद्धम् । मणगपिअरं दसकालिअस्स निज्जूहगं वंदे ॥ मणगं पडुच्च सेज्जं—भवेण निज्जूहिआ दसज्झयणा । वेआलिआइ ठविआ तम्हा दसकालिअं नाम २ तत्क्षेपसंबंधसूचकं चूलिकाद्ययननिर्युक्तिगाथाद्विकमिदं—छहिं मासेहिं अहीअं अज्झयणमीणं तु अज्जमणगेणं । छम्मासा परिआओ अह कालगओ समाहीए १ आणंदअंसुपायं कासी सिज्जंभवा तहिं थेरा । जसभद्दस्स य पुच्छा कहणा य विआलणा संघे २ एतद्गाथावस्तु श्रीहरिभद्रसूरिविरचितवृत्तेरवसेयं अथात्र किञ्चित्कथानकमुच्यते—यदा शय्यंभवाचार्यः प्रव्रजितस्तदा तस्य गृहिणी गर्भिण्यासीत् जातश्च तस्याः पुत्रः क्रमेण, नामास्य कृतं मनक इति, यदा च सोऽष्टवार्षिको जातस्तदा स मातरं पृच्छति, क मम पिता ? सा भणति तव पिता प्रव्रजितः ततः स पितृसकाशे गंतुमना लब्धवृत्तान्तश्चम्पायां गतः, आचार्येण संज्ञाभूमिं गतेन स दृष्टः, तेन च वन्दित आचार्यः, उभयोश्च मिथः प्रेक्षमाणयोः स्नेहो जातः, आचार्यः पृच्छति कस्तव पिता ? स भणति शय्यंभव इति, ततः सूरिणा भणितं किमर्थमागतोऽसि ? तेनोक्तं प्रव्रजिष्यामि, यदि यूयं जानीथ तदा कथयत क्वास्ति मम पितेति, सूरिणोक्तं स मम मित्रमेकशरीरीभूतः तत्र प्रव्रज त्वं मत्पार्श्वे ? प्रतिपन्नं च तेन, ततः स प्रव्राजितस्तत्रैव सूरिणा,

आगतस्तेन सहोपाश्रये, उपयोगं दत्तवानाचार्यः कियदायुरस्येति, ज्ञातं चातः परं षण्मासा आयुरस्येति, उत्पन्ना च बुद्धिराचार्यस्य, अस्य स्तोकायुषः किं कर्तव्यमिति, विममर्श च–"चउदसपुव्वी कम्हिवि कारणे समुप्पन्ने निज्जूहइ अपच्छिमो पुण चउदसपुव्वी अवस्समेव निज्जूहइ, मम वि इमं कारणं समुप्पन्नं, तओ अहमवि निज्जूहामि, ताहे आढत्तो निज्जूहिउं जाव थोवावसेसे दिअसे इमे दसज्झयणा निज्जूढा." उद्धृतानि विकालवेलायां पाश्चात्यचतुर्घटिकारूपायां स्थापितान्येकत्र कृतानीति, ततः षड्भिर्मासैरधीतमध्ययनमिदं दशवैकालिकाख्यः श्रुतस्कन्धो मनकेन, ततः समाधिना स कालं गतः, तस्मिन स्वर्गते आराधितमनेनेति शय्यंभवा आनन्दाश्रुपातमकार्षुः, ततस्तत्प्रधानशिष्येण यशोभद्रेण कारणे पृष्टे प्रोक्तं भगवता संसारस्वरूपम् ततो यशोभद्रादयो गुरुवद्गुरुपुत्रे वर्त्तितव्यमिति न्यायमार्गः.स चास्माभिर्नाचरित इति पश्चात्तापं चक्रुः. अथ शय्यंभवेनाल्पायुषमेनमवेत्य मयेदं शास्त्रमुद्धृतं.किमत्र युक्तमिति सङ्घाय निवेदिते विचारणा कृता.यदुत कालदोषात्प्रभूनसत्त्वानामिदमेवोपकारकमतास्तिष्ठत्वेतादिति नोपसंहृतं प्रवचनगुरुणेति इति श्रीसमयसुन्दरोपाध्यायविरचितश्रीदशवैकालिकशब्दार्थवृत्त्युपसंहारः संपूर्णः, ॥ श्रीरस्तु ॥

इति श्रीदशवैकालिकसूत्रं सटीकं समाप्तम्.

श्रीमुंबाइसमातनाश्रीसंघ स्वपरना श्रेयमाटे खेमराज श्रीकृष्णदासना श्रीवेङ्कटेश्वर छापखानामां छापी प्रसिद्ध कर्या छे ॥ समाप्तोऽयं ग्रंथो गुरुश्रीमद्बृहत्खरतरगच्छीय श्रीमद् श्रीजिनयश सूरिप्रसादात् ॥



